The Tattvalocana Granthamala Series No. 1



# ISVARASVARUPAM

BY

*Vidyabhaskar Shri Manishankar Vasantram Upadhyaya*

Snataka-Shri Rishikul Vishva Vidyapith Hardwar.

*( Jayshri Model High School, Baroda )*

WITH A FOREWORD

BY

*Dr. S. S. Bhawe*, M. A., LL. B., Ph. D. ( Bonn a/Rhein ),

*Prof. of Sanskrit,*

**The M. S. University of Baroda,**

**BARODA**

**Price : Rs. 3/-**

# Foreword.

---

A very interesting and important doctrine propounded by ancient Indian philosophers is that of metempsychosis or the transmigration of souls called '**Punarjanma**' and '**Purvajanma**' based on the theory of Karman. All the ancient religions of India, Hinduism as well as Jainism and Buddhism, accepted this doctrine and it may safely be said that an important part of their religious teaching ,including their ethics, is based on that all-embracing doctrine of Karman. Religion being one of the ruling passions of Indians, this doctrine naturally influenced their entire life, their social behaviour and their general outlook on the world. In fact on account of the belief in this doctrine on the part of Indians many Westerners have been led to describe the Indian '**Weltanshauung**' ( view on life ) as 'pessimistic'. Even a poet like Kalidasa in his famous line in the S'akuntala 'भावस्थिराणि जननान्तरसौहृदानि' shows the deep influence of this doctrine on him, and his last prayer to God " May that blue-red God (S'iva) destroy my cycle of rebirths ! " shows the influence of the same Kalidasa's example is only typical of the whole Indian literature from the ancient times down to the age of modern Indian languages, or more particularly up to the age of Chaitanya, Tulsidasa, Mirabai, Narsi Mehta, Jnaneshwar, Tukaram and the South Indian Vaishnava Saints. It is obvious, therefore, that to anyone concerned with the real mind and spirit of the Indian, the consideration of this doctrine is of paramount importance—the consideration regarding its validity or otherwise.

A great authority on Indian Philosophy, Dr. Das Gupta, has in one place expressed the opinion that the doctrine of

transmigration is only stated and reiterated ad nauseam in ancient Indian philosophical works, but that it is nowhere actually proved ( with the exception of some Nyaya texts where the proof is hardly convincing ). In the face of this authoritative opinion, it becomes the more incumbent on students of ancient Indian philosophy and culture to examine this doctrine thoroughly. For, if we effectively reject it, we can have the credit of finally freeing the Indian mind from this bugbear of ' पुनरपिजननं पुनरपि मरणम्' as the great S'ankaracharya so beautifully puts it, or if we confirm it, we can again start the work of remoulding the modern Indian's outlook on life, which is so tremendously affected by Western science and the philosophy of positivism with its insistence on laboratory test and reliance only on reason.

In this book, ईश्वरस्वरूपम्, Vidyabhaskara Pandit Manishankar V. Upadhyaya of Baroda has boldly applied himself thoroughly to thrash out this doctrine once for all, especially from the point of view of the ' **Dars'anas** ' or the ' Six Systems of Indian Philosophy'. Besides being a great Vaiyakarana, the Panditji is well-versed in the Dars'anas, especially Samkhya and Yoga, which systems he has mastered in an enviable manner; he is also an adept in Dharmas'astra. Obviously his competence to deal with the subject is self-evident. But what is more remarkable is that along with his grounding in the ancient lore, he is remarkably original and independent in his outlook and does not flinch even an inch, when he finds it inevitable that he must challenge even the great S'ankaracharya. In fact he has done so in this book, and many more other things, which the careful reader will find out for himself. I need only say that the Panditji has done a great service to all lovers and students of Indian philosophy by thoroughly discussing this all-embracing problem of the real nature of God and

consequently the truth or otherwise of the doctrine of transmigration in the light of his conception of the Godhead.

To him **everything** in the Universe is the form of God; both good and evil are His modes; दुर्गुणा: सद्‌गुणाश्चापि सन्ति विश्वात्मन: प्रभो (st. 24). Here I am reminded of Prof Edgerton's criticism of the Vibhutiyoga of the Gita that therein all **good** things only are said to be the Lord's 'Vibhutis' but there is a little shirking to give that honour to the worst things in nature (of course with some solitary exceptions). The great S'ankaracharya very intelligently points out, as if anticipating the American Orientialist's objection, that the '**Vibhutis**' are meant not to give a final knowledge of God but they are meant only **as objects of Divine meditations** (ध्येयत्वेन उक्ता: न तु ज्ञेयत्वेन). But Pandit Upadhyaya's theory suffers from no such possible objection; he, in fact, asserts that there is nothing in this world, which is not the form of God; cf. सर्वमेतद् विभो रूपं नास्ति तद् यन्नचेश्वरम् ॥ (st. 482). To some this may not appear quite original, for even the Gita says 'Oh God! thou art both *sat*, *asat* and all that is beyond!' Yet the further conclusions that the Panditji draws from this are bold and quite helpful to the doctrine of universal brotherhood and equality. He naturally condemns untouchability (cf st. 355-365) and holds the Varna system as untenable. His पुनर्जन्मवादखण्डन begins with st. 89 (p. 11) and goes on up to st. 152 and then he puts certain questions to the पुनर्जन्मवादिन् (cf. stt. 153-159). **Many** of them will have to be satisfactorily answered before we believe in the doctrine of पुनर्जन्म. All this may not be startling to a **modern** thinker, but coming as it does from a Pandit of orthodox and traditional education, it has certainly a great value, and one can expect what a storm the book will create among the majority of the Pandits of the orthodox school. The value of the book, however, does not lie in the controversies that it may raise, but I think, it really lies in the fact that here is a

**detailed** discussion of a very important doctrine of ancient Indian religion. Perhaps all may not agree with what the book actually proves, yet, it opens a new field of thought, offers some striking interpretations of old texts, and is written in such a graceful and simple Sanskrit as would be understood even by one who has just a working knowledge of that great language. I, for myself, humbly beg to suggest that Sanskrit scholars may peruse this book and by offering their frank criticism help solve this important problem once for all, for which the Panditji will certainly be grateful to them.

I have no other apology to offer for making bold to write this introduction than the fact that the Panditji insisted on my doing so. Otherwise I am conscious that these few words are an excellent example of what the Sanskritists call 'दीपिकापौनरुक्त्यन्याय'.

*S. S. Bhawe.*

सत्यस्त्वमेव विपरीतगिरस्त्वसत्याः
धर्मस्त्वमेव विपरीतकृतस्त्वधर्म्याः ।



न्यायस्त्वमेव विपरीतनया विनेया
ध्येयस्त्वमेव विपरीतधियस्तु हेयाः ॥

श्रीः ॥

ॐनमः शिवाय

# ॥ समर्पणम् ॥

सत्यस्वरूप धृतसंयम सत्यहेतोः
प्रेमस्वरूप पतितोत्तरणैकसेतो ।
धैर्यावतार धृतभारतभूरिभार
वन्दे सदा तव पदं करुणावतार ॥१॥

भूमण्डलं निखिलमाकलयन् स्वकीयं
स्नेहाम्बुना प्रशमयन्नशिवं तदीयम् ।
उच्चैः स्थितः सकलभूतलमानवानाम्
अन्यो न भाति भवतो भुवि विश्रुतानाम् ॥२॥

कारुण्यनीरकणिकामपि ये स्पृशन्तः
क्रूराः पुरेह लघुतामवहन्नसन्तः ।
जातास्त एव नवनीतसमाः स्रवन्तस्
त्वत्प्रीतिपूर्णवचसा सहसैव सन्तः ॥३॥

ते षड् गुणास्त्रिविधशक्तिभिरेधमानाः
सामादयश्च निपुणैरपि युज्यमानाः ।
यस्याग्रतो विफलतामभजन्, भजेऽहं
सत्यव्रतं तमतिरोहितसत्यदेहम् ॥४॥

प्रेमाश्रुभिः स्नुतपरिप्लुतपद्मनेत्रं
श्रीरामनामजपपूजितपुण्यवक्त्रम् ।
सत्यानुरागकरुणाप्रवणैकचित्तं
वन्दे दरिद्रपतितार्पितसर्ववित्तम् ॥५॥

स्वातन्त्र्यमेव निजभारतमातृभूमेः
साध्यं परं स्वमनसा निपुणं निरूप्य ।
सर्वस्वमेव सुतवित्तकलत्रमित्रं
देहं भवानुदसृजत् परमं पवित्रम् ॥६॥

वासः स्वचक्रकरकृत्तपवित्रसूत्रम्
आधाय कर्कशमसंवृतसर्वगात्रम् ।
शीतातपक्लमसहो धृतवेणुदण्डः
कस्त्वत्परो जयति भारतभक्तिशौण्डः ॥७॥

मत्वाऽतिदीनपतितोद्धरणं प्रधानं
धर्मं श्रुतिस्मृतिमताध्वसु गीयमानम् ।
सत्येन निर्गमयति स्म भवानपूतं
पैशुन्यकं मतमतान्तरमूलभूतम् ॥८॥

धर्मध्वजिव्रजविनिन्दितसद्गुणोऽपि
कूटाभिचारिकविभावितदुर्गुणोऽपि ।
नैवोच्चचाल निजनिश्चितसत्यमार्गात्
सत्याग्रहाद् विजयते स भवानुदग्रात् ॥९॥

मिथ्योपपादितनिजोत्तमताभिमानै-
र्दासीकृतानवमतान् बहुधाऽवमानैः ।
एको भवान् सजलदृक् करुणावतारः
प्राणप्रियान् हरिजनानुरसा बभार ॥१०॥

हिन्दुत्वमित्यभिनवं परिकल्प्य शस्त्रं
सृष्ट्वा च यावनमरुन्तुदमुत्कटास्त्रम् ।
क्रूरैः कदर्थितपरिक्षितखण्डितस्य
त्राता भवान् विजयतेऽखिलभारतस्य ॥११॥

कोटीं ररक्षिथ निजं शरणं गतानां
स्त्रीबालवृद्धहतपुत्रकलत्रकाणाम् ।
एतादृशो जगति को भविता त्वदन्यो
यः स्यादसङ्ख्यजनजीवनदो वदान्यः ॥१२॥

विस्मृत्य बान्धवधियं पशुतामुपेतान्
अन्योन्यभक्षणधिया रणमभ्युपेतान् ।
सत्यामभेदसुभगां गमयन्नहिंसाम्
एकीचकार स भवानिह भारतीयान् ॥१३॥

त्राणार्थिनामकरुणैः परिपीडितानां
त्राणाय निर्भयमनाः सहसा द्रुतानाम् ।
एकः सहायरहितः स्रवदश्रुधारो
धावन् सदा विजयसे विदितात्मसारः ॥१४॥

द्वीपान्तरस्थितसुरासुरसार्वभौमा
बौद्धैषवीययवना अपरे च भौमाः ।
यस्योपदेशरसमद्य विना विवादं
सम्मन्वते स्थिरसुखाय जगत्प्रसादम ॥१५॥

राजेन्द्रवल्लभजवाहिरवीरमुख्यै—
राराधितस्य हृदयेन निरस्तसौख्यैः ।
तस्याद्य देव पदयोस्तव राष्ट्रवादाः
सर्वे पतन्ति जगतां गलितप्रमादाः ॥१६॥

तद्रामराज्यमिह भारतभूमिभागे
प्रत्नं प्रवर्तयितुमीहितसत्यमार्गे
रामानुरूपहृदये भवति प्रकामाः
शश्वत् स्थिराः प्रविलसन्तु जगत्प्रणामाः ॥१७॥

एतादृशस्य तव नश्वरभौतिकांशं
प्रक्षीणमुग्रतपसा जरसा नतांसम् ।
एको जघान यवनादपि नीचनीचो
हा हन्त हिन्दुहतकः श्वपचादपीचः ॥१८॥

पौरा अरुन्तुदगिरस्तुतुदुः प्रशान्तं
रामं, जघान यदुवंशमणिं किरातः ।
प्रायो भवादृशि भवाभ्युदयात्तरूपे
लोका द्विषन्ति कुटिला भगवत्यरूपे ॥१९॥

योऽन्तश्चचार भुवनत्रयमण्डनानां
श्रीरामकृष्णसुगतेषुमहम्मदानाम् ।
तेनाऽऽत्मनातिमहताऽभिहितो महात्मा
प्रादुर्बभूव भगवान् भुवनत्रयात्मा ॥२०॥

सर्वात्मना सकलजीवशिवैकमत्या
स्नेहं च सत्त्यमिह वर्तयितुं प्रवृत्त्या ।
सम्बन्धवानिति च गन्धपदेन युक्तो
गांधीति देव ! विदितोऽप्यसि नित्यमुक्तः ॥२१॥

सत्येन वाङ्मनसकर्म–सुसङ्गतेन
स्नेहेन सर्वपतितापतितस्थितेन ।
सम्मोहितं त्रिभुवनं भवतेति लोक–
स्त्वां मोहनं वदति सप्रश्रयाः सतोकः ॥२२॥

एकान्तशान्तभवदीयमनःप्रवृत्त्या
दूरेनिरस्तधनमानमदादिवृत्त्या ।
मुक्तस्वतन्त्रसकलोदितभारतस्य
त्वामभ्यगात् प्रथमराष्ट्रपितृत्वमस्य ॥२३॥

त्वद्वीरतामनुविचिन्त्य चलं मनो मे
धीरत्वमेति, नितरां दृढतामुरो मे ।
बुद्धिः स्थिरा भवति निर्भयतामुपैति
स्वान्तस्थितार्थकथनान्न मनाग् बिभेति ॥२४॥

सत्यस्त्वमेव विपरीतगिरस्त्वसत्याः
धर्मस्त्वमेव विपरीतकृतस्त्वधर्म्याः ।
न्यायस्त्वमेव विपरीतनया विनेया
ध्येयस्त्वमेव विपरीतधियस्तु हेयाः ॥२५॥

आराधयन्ति विविधैरुपचारकल्पैः
सन्तःस्वतन्त्रधिषणाः स्वकृतैरनल्पैः ।
केनाधनोऽहमधुना तु भवन्तमेयाम्
आराध्य जीवनफलं पुनरभ्युपेयाम् ॥२६॥

यातेष्वनेकगुणकल्पयुगान्तरेषु
रामानुकारिचरितो भुवनान्तरेषु ।
दैवात्कदाचिदिह कोऽपि भवादृगात्मा
प्रादुर्भवत्यतितमां विरलो महात्मा ॥२७॥

मन्ये न केवलमियं वसुधैव धन्या
लोकत्रयी भगवता तु कृताऽतिधन्या ।
हिंसामपास्य विजयस्य नवः प्रकारो
यस्यां कृतः स्थिरपदोऽभिनवोपहारः ॥२८॥

स्वातन्त्र्यसम्पदि चिरादुपलिप्सितायां
निर्वैरनिर्भयधिया भवताऽऽर्पितायाम् ।
चेतः स्वतन्त्रमिव सत्यगवेषणायाम्
अद्य प्रवृत्तमतिमात्रहितावहायाम् ॥२९॥

तस्याः फलं समुदितं मनसः प्रवृत्ते—
रासादितं यदधुना परमेशरूपम् ।
तत्ते मुदे चरणयोरुपनीय मूलं
कैवल्यकूलमुपयानि सदानुकूलम् ॥३०॥

अन्ते पुनश्चरणयोरिदमर्पयित्वा
श्रीशस्वरूपमभयं च वरं गृहीत्वा ।
त्वत्तः सदाभिनवसाहसशौर्ययुक्तात्
कर्तव्यवर्त्मनि पुनः प्रविशामि मुक्तात् ॥३१॥

इति समर्पयति

विद्याभास्करः श्री मणिशङ्करो वसन्तरामात्मज उपाध्यायः

# विषयानुक्रमणिका

## १ दर्शनत्रयसमन्वयो नाम प्रथमः परिच्छेदः १—४



## २ सृष्टिक्रमो नाम द्वितीयः परिच्छेदः ४—७



## ३ चेतनाया विकासक्रमो नाम जीवोत्पत्तिर्नाम वा तृतीयः परिच्छेदः ८—१३

४ संस्कारविचारो नाम चतुर्थः परिच्छेदः १३—२२



५ जडचेतनयोरभेदसाधनं नाम पञ्चमः परिच्छेदः २३—२६



६ पञ्चविधेश्वरोपासनोपन्यासो नाम षष्ठः परिच्छेदः २६—२८



७ वर्णानां विनष्टप्रायतानिरूपणं नाम सप्तमः परिच्छेदः २९-३२

## ११ पुनः समन्वयोपसंहारौ नामैकादशः परिच्छेदः ५४–५६



## १२ न्यायमतचिन्तनं नाम द्वादशः परिच्छेदः ५७–६७



## १३ सांख्यनयेन पुनर्जन्मवादविचारो नाम त्रयोदशः परिच्छेदः ६५–८८

## १४ योगाचार्याणामप्यसम्मतः पुनर्जन्मवादो नाम चतुर्दशः परिच्छेदः ८८–११५

## १५ उपसंहरणं नाम पञ्चदशः परिच्छेदः ११५--१२४

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ८ | सरये | सस्ये |
| १२ | १० | धातुमिमातिस्त्र: | धातुमिमास्तिस्त्र: |
| १६ | १७ | पितृणामेव | पितॄणामेव |
| २० | २० | याज्ञिको | याज्ञिक: |
| २१ | ५ | स्त्रपूवजै: | स्वपूर्वजै: |
| २२ | १९ | जरायुजाण्डजोदभिज्ज | जरायुजाण्डजोद्भिज्ज |
| २३ | २ | जडचेतनयोर्भेदस | जडचेतनयोर्भेदस्य |
| २७ | १० | रयादाहता | स्यादाहता |
| ३३ | १ | अष्टवर्षवयस्काऽसौ | अष्टवर्षवयस्कोऽसौ |
| ३५ | १९ | रमर्यमाणो | स्मर्यमाणो |
| ४२ | ३ | भवर्ि रभवद् | भवद्भिरभवद् |
| ४२ | ९ | श्रीमर्ि स्तेषु | श्रीमद्भिस्तेषु |
| ५१ | ७ | सिद्यति | सिद्ध्यति |
| ५२ | १ | पञ्चभतात्मन: | पञ्चभूतात्मन: |
| ५२ | १५ | देवीमुपारमहे | देवीमुपास्महे |
| ५६ | १६ | विरमाम्यल्पचेतन: | विरमाम्यल्पचेतन: |
| ७६ | १२ | फलन्त्यासादाद्य | फलन्त्यासाद्य |
| ८६ | १ | पारतन्त्र्यमरमाकं | पारतन्त्र्यमस्माकं |
| ८६ | १ | रथातुमात्मन: | स्थातुमात्मन: |
| ८७ | १८ | मृजते | सृजते |
| १०० | ८ | विभक्ता:पन्था: | विभक्त:पन्था: |
| १०४ | १ | पृथगरितत्वे | पृथगस्तित्वे |
| १०४ | ११ | पूर्वतत्त्वानतिक्रथात् | पूर्वतत्त्वानतिक्रमात् |
| ११० | ८ | ह्युत्परञ्जकात् | ह्युपरञ्जकात् |
| ११९ | १६ | कुण्ठितायापत: | कुण्ठितायामत: |

॥ श्रीः ॥

ॐ नमःशिवाय.

# ईश्वरस्वरूपम्

## दर्शनत्रयसमन्वया नाम प्रथमः परिच्छेदः

एक एवेश्वरो नाम पदार्थः परमो मतः ।
देशकालार्थभेदेन यस्त्रिधा सन्निरूप्यते ॥ १ ॥

( न्यायमतेन समन्वयः )

एकं भावात्मकं रूपं तस्यास्ति परमेशितुः ।
द्वितीयं चाप्यभावाख्यं यत् सदा सुगमं बुधाम् ॥ २ ॥
भावे वैशेषिकास्त्वस्मिन् षडर्थान भावयन्ति हि ।
अभावे चतुरोऽभावान् प्राक्प्रध्वंसादिभेदतः ॥ ३ ॥

( साङ्ख्यमतेन समन्वयः )

तं भावरूपमीशानं साङ्ख्याचार्याः पुरातनाः ।
प्रधानं परमाव्यक्तं प्रकृतिं च प्रचक्षते ॥ ४ ॥
यस्त्वभावस्वरूपोऽसावीश्वरः सोऽत्र दर्शने ।
अधिष्ठानाभिधानो हि पुरुषः प्रोच्यते बुधैः ॥ ५ ॥

*उपाधिभेदादाकाशो यथा भेदाः प्रकल्पिताः ।
तथा सत्कार्यभेदेभ्यो भेदाः पुंसि प्रकल्पिताः ॥ ६ ॥

( वेदान्तमतेन समन्वयः )

परं चैवाऽपरं चेति द्वे रूपे ब्रह्मणो मते ।
श्रुतिष्वपि यतस्तस्माद् रूपद्वयभृदीश्वरः ॥ ७ ॥
अशब्दास्पर्शनीरूप—निर्गन्धादिविशेषणैः ।
कठादिषु स्तुतं यत्तु रूपं तद् ब्रह्मणः परम् ॥ ८ ॥
तदेवाग्निस्तदादित्य इत्यादिश्रुतिभिस्तथा ।
यत्तु संगीयते रूपमपरं ब्रह्मणश्च तत् ॥ ९ ॥

( दर्शनत्रयसमन्वयः )

अधिष्ठानादभावाद्वा पुरुषाद्वा प्रदेशतः ।
तत्परं ब्रह्मणो रूपं न मनागतिरिच्यते ॥ १० ॥

---

* 'उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः' ( १ अ. १९. सू. ). 'उपाधिर्भिद्यते न तु तद्वान्' ( १ अ. १५१ सू. ) इत्यनयोः सूत्रयोः पुरुषस्याकाशेन सादृश्यं पूर्वपक्षिणा प्रदर्शितम् ॥ 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः', 'एको देवः सर्वभूतेषु गूढः', इत्यादिश्रुत्यर्थसमर्थनायापि सिद्धान्ततः पुरुषैकत्वं प्रतिपाद्य भाक्तमनेकत्वं प्रतिपत्तव्यम् । सिद्धान्ततः पुरुषस्य नानात्वे तु 'तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चिद्' इति कारिकयाऽपि विरोधः स्यात् । 'संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्,' इति वचनमपि पुरुषस्य संसरणं प्रतिषेधति । पुरुषस्य च संसरणाभावे स्वीकृते तन्नानात्वस्य स्वीकरणे नहि किञ्चिदपि फलमुत्प्रेक्ष्यते ॥

त्रैगुण्यात् परमाणुभ्यो भावाख्याद्वा पदार्थतः ।
ब्रह्मणश्चापरं रूपं तथेषन्नातिरिच्यते ॥ ११ ॥
ब्रह्म वा परमात्मा वा अन्तर्यामीश्वरोऽव्ययः ।
सर्वानमून्समानार्थान् शब्दानाख्यान्ति योगिनः ॥ १२ ॥

( सद्रूपेश्वरवर्णनम् )

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कारश्चेन्द्रियाणि तस्यैवेशस्य विक्रियाः ॥ १३ ॥
सूर्याचन्द्रमसावेतौ ग्रहनक्षत्रतारकाः ।
पर्जन्यो वारिधिः सिन्धुर्नदा नद्यो वसुन्धरा ॥ १४ ॥
लता गुल्मास्तथा वृक्षाः पर्वताः कन्दरास्तथा ।
सर्वमेतद् विभो रूपमेकस्य परमेशितुः ॥ १५ ॥

( ईश्वरशरीरवर्णनम् )

यथाऽस्थीनि शरीरेऽस्मिन्नायतानि शरीरिणः ।
पञ्च भूतान्यपि तथा हीश्वरस्य कलेवरे ॥ १६ ॥
यथा नाड्यः शरीरेऽस्मिन् सन्तताः सन्ति देहिनः ।
जातयोऽपि तथानन्ताः सन्तीश्वरकलेवरे ॥ १७ ॥
यथा कीटाणवः सूक्ष्माः प्राणिनां शोणितोदके ।
नवा नवाः प्रजायन्ते प्रलीयन्ते नवा नवाः ॥ १८ ॥
तथाऽत्र भगवद्देहे कोटिब्रह्माण्डसम्मिते ।
पञ्चभूतैकसंयोगाज्जायन्ते प्राणिनां चयाः ॥ १९ ॥

देवदानवगन्धर्वा मनुष्या यक्षराक्षसाः ।
पशवः पक्षिणो नागा मत्स्याः कच्छपशूकराः ॥ २० ॥
जलस्थलभुवो जीवा ग्राम्या आरण्यकास्तथा ।
आन्तरिक्षास्तथा दिव्याः पार्थिवाः प्राणिनश्च ये ॥ २१ ॥
ते सर्वेऽपीश्वरस्यास्य शोणितस्थाऽणुजन्तवः ।
अलब्धकाला जीवन्ति लब्धकालाः प्रयन्ति च ॥ २२ ॥
नीचैर्नीचैस्तमा येऽपि दुर्गुणाः सन्ति देहिनः ।
उच्चैरुच्चैस्तमा ये च सद्गुणाः सन्ति योगिनः ॥ २३ ॥
ते सर्वेऽप्यस्य देवस्य व्यापकस्य चराचरे ।
दुर्गुणाः सद्गुणाश्चापि सन्ति विश्वात्मनः प्रभोः ॥ २४ ॥

## इति प्रथमः परिच्छेदः

---

## अथ सृष्टिक्रमो नाम द्वितीयः परिच्छेदः

निजे शून्यस्वरूपेऽस्मिन्नधिष्ठाने ह्यधिष्ठितः ।
प्रधानाव्यक्तसद्भावसंज्ञाशब्दैरभिष्टुतः ॥ २५ ॥
स एष भगवानीशः केवलानन्दकाम्यया ।
प्रवर्तते स्वयं स्वस्मिन्नाप्तकामो निराकुलः ॥ २६ ॥
अशक्नुवम् निजेनैकस्वरूपेण प्रवर्तितुम् ।
त्रिधा बिभेद स्वं देहं रजःसत्त्वतमोगुणैः ॥ २७ ॥
सात्त्विको राजसश्चेति तामसश्चेति भेदतः ।
त्रयो महान्तः सन्त्यस्य कायाः प्रख्यातिमागताः ॥ २८ ॥

अनन्तकोटिब्रह्माण्ड—रचनायामिमे त्रयः ।
प्रधाना अंशतः सन्ति तदुपादानहेतवः ॥ २९ ॥
त्रिष्वप्यमीषु देहेषु त्रिविधाः सन्ति ते गुणाः ।
सात्त्विका राजसास्तद्वत् तामसाश्चेति विश्रुताः ॥ ३० ॥
गीतायां भगवद्व्यासकृतिष्वन्यासु चेरिताः ।
त्रयोऽप्यमी गुणाः सन्ति वैशिष्ट्येन पृथक् पृथक् ॥ ३१ ॥
कामः क्रोधस्तथा लोभो मोहो मात्सर्यमेव च ।
प्रमदश्च प्रमादश्च मदोन्मादौ तथैव च ॥ ३२ ॥
एते चान्ये च ये दोषा गुणा वा सन्ति देहिषु ।
ते सर्वेऽस्य त्रिकस्यैव प्रायोंऽशादुद्भवन्ति हि ॥ ३३ ॥

( चार्वाकाणां समन्वयः )

वेदविज्ञानवेत्तारः सौगतेभ्यः पुरातनाः ।
केऽपि चार्वाकशब्देन शब्दिताः परमर्षयः ॥ ३४ ॥
तदेतद् भगवद्रूपं गुणभेदाच्चतुर्विधम् ।
विज्ञाय नित्यसत्ताकमुपासाञ्चक्रिरे मुदा ॥ ३५ ॥
'तत्र चत्वारि भूतानि भूमिवार्यनलानिलाः' ।
इत्यादिपद्यैरेतेषां तत्त्वं सत्त्वं न्यरूपयन् ॥ ३६ ॥
इमान्येव हि चत्वारि तत्त्वानि परमर्षिभिः ।
ऋक्षु स्तुतानि, गीतानि सान्ति सामसु भूरिशः ॥ ३७ ॥
भूतेभ्योऽपि परस्त्वेभ्योऽभविष्यद्यदि हीश्वरः ।
कुतो न वेदेष्वस्माकमस्तोष्यत मुहुर्मुहुः ॥ ३८ ॥

अग्निरिन्द्रो मरुत्सोमः सविता वरुणोऽथवा ।
यश्च स्तुताः पृथग्वेदे न तथा भवदीश्वरः ॥ ३९ ॥

तस्माद् यत्सत्त्वमुद्रिक्तं तत्तेजोमण्डलं महत् ।
यद्रजस्तज्जलं वायुर्यत्तमः सा मही गुरुः ॥ ४० ॥

वेदा अग्नीन्द्रवाय्वादिशब्दैस्तं तुष्टुवुः पुरा ।
गुणत्रयाभिधानेन साङ्ख्याचार्यास्तमस्तुवन् ॥ ४१ ॥

चतुर्णां भूततत्त्वानां नित्यसत्तैकभाषिणः ।
चार्वाका अपि ते सन्तस्तमेवेश्वरमस्तुवन् ॥ ४२ ॥

( जगद्वैविध्यकारणम् )

अन्योऽन्याभिभवश्चैषामन्योऽन्याश्रय एव च ।
अन्योऽन्यमिथुनीभावस्तथाऽन्योऽन्यसमुद्भवः ॥ ४३ ॥

एते त्रयाणां तत्त्वानां सत्त्वादीनां विशेषतः ।
गुणाः सन्ति यतो ह्येतद् विविधं दृश्यते जगत् ॥ ४४ ॥

( स्थूलमीश्वररूपम् )

तस्माद् यद् दृश्यते लोके स्थूलं वा सूक्ष्ममेव वा ।
तत्सर्वं ब्रह्मणो रूपमत्र मा भूः कुशङ्कितः ॥ ४५ ॥

समुदित्य प्रभाते यः सायमस्तं प्रयाति च ।
स तेजोनिधिरादित्यस्तस्मादीश्वर एव नः ॥ ४६ ॥

ये ग्रहास्तारकाश्चापि महाऽकाशे प्रतिष्ठिताः ।
ते सर्वेऽपीश्वरस्यास्य तथैवांशा यथा रविः ॥ ४७ ॥
यो महान् प्रभवाभिख्यो नभश्चारी सदागतिः
सोऽनन्तगोलभृद् वायुस्तस्मादीश्वर एव नः ॥ ४८ ॥
तेजःकिरणसंयोगाद् यद् द्रुतं द्रवति स्फुटम ।
तेजसो विप्रयोगाच्च यद्धिमं जडमुच्यते ॥ ४९ ॥
ओषधीषु समस्तासु वनस्पतिलतासु च ।
सस्ये घासे तृणेऽन्ने च रसरूपमधिष्ठितम ॥ ५० ॥
रसरक्तस्वरूपेण यच्च देहेषु देहिनाम ।
स्रवत्यजस्रं तद्वारि तस्मादीश्वर एव नः ॥ ५१ ॥
माता तु धरणी देवी कस्य नेश्वरशब्दिता ।
या बिभर्ति स्वयं स्थूला जगत् स्थावरजङ्गमम् ॥ ५२ ॥

( चेतनाया ईश्वररूपता )

कीटादिब्रह्मपर्यन्तं प्राणभृत्सु समेषु च ।
चेतना दृश्यते सापि शक्तिरीश्वरसंज्ञिता ॥ ५३ ॥
प्रादुर्भूतामिमामेव चेतनां चिन्मयं परम् ।
ब्रह्म चेश्वरमाख्यान्ति वेदसारविदो बुधाः ॥ ५४ ॥
यावन्तः प्राणिनस्तस्मादीश्वरांशा न संशयः ।
जातयोऽपि तथाऽनन्ता ईश्वरस्य कला मताः ॥ ५५ ॥

**इति द्वितीयः परिच्छेदः**

# अथ चेतनाया विकासक्रमो नाम जीवोत्पत्तिर्नाम वा तृतीयः परिच्छेदः

या त्वहन्ताऽथ ममता प्राणभृत्सु प्रदृश्यते ।
सा विकासं क्रमादेति पत्रं पुष्पं फलं यथा ॥ ५६ ॥

मातापित्रोरहङ्काराच्चिरेण परि निष्ठितात् ।
कामः प्रजायते पूर्वमुभयोरन्तरात्मनि ॥ ५७ ॥

अस्मान्मनसिजात् कामात् प्रवृत्ताद्वरकन्ययोः ।
मन्दरादिव पाथोधिर्मथ्यते शोणिताम्बुधिः ॥ ५८ ॥

तस्मात्प्रमथिताद्ब्धेस्तान्मात्रिकमनामयम् ।
कलेवरं किमपि तत् कमनीयं प्रजायते ॥ ५९ ॥

शुक्रशोणितसंयोगाद् गर्भाशयगतं च तत् ।
मातुरन्नाम्बुनिःश्वासैरूष्मणा चोपचीयते ॥ ६० ॥

क्षीरसागरमध्यस्थं तं नारायणमीश्वरम् ।
पुराणेष्वितिहासेषु कल्पयन्ति मनीषिणः ॥ ६१ ॥

न व्यक्तमस्ति चैतन्यं न मनो नाप्यहङ्कृतिः ।
न कल्पना न वा बुद्धिः पिण्डेऽस्मिन् पाञ्चभौतिके ॥ ६२ ॥

यथा यथा तु निर्दोषैर्मातुराहारवर्तनैः ।
पुष्टिमायात्यसौ देहस्तदङ्गानि तथा तथा ॥ ६३ ॥

परिपुष्टेष्वथाऽङ्गेषु विकसत्सु निजाशये ।
तत्पोषणकृतः प्राणाः पुनस्तस्मिँश्चरन्ति हि ॥ ६४ ॥

प्राणेषु सञ्चरत्स्वस्मिँश्चैतन्यमपि जायते ।
ततः प्रभृति देहोऽसौ जीव इत्यभिधीयते ॥ ६५ ॥

प्राणधारणसंज्ञोऽसौ यावदत्र कलेवरे ।
व्यापारस्तावदेवैनं जीवमाख्यान्ति साधवः ॥ ६६ ॥

प्राणधारणसंज्ञेऽस्मिन् व्यापारे तु लयं गते ।
न जीवो नाऽपि चैतन्यमुपयोगाय कल्पते ॥ ६७ ॥

( देहात्मवादश्चेतनोत्पत्तिर्वा )

तस्मात्तान्मात्रिको यस्तु देहोऽसौ पाञ्चभौतिकः ।
तं मातापितृजं प्राहुः साङ्ख्याचार्याः कलेवरम् ॥ ६८ ॥

गौरवान्मार्दवादत्र पिण्डे सत्त्वात्तथोष्मणः ।
प्राणसञ्चरणादुक्तः पिण्डो नः पाञ्चभौतिकः ॥ ६९ ॥

यावन्न सञ्चरन्त्येते प्राणाः शुद्धे कलेवरे ।
न देहोपचयस्तावत् तस्मात् प्राणा हि जीवनम् ॥ ७० ॥

प्राणानामपि सञ्चारे हेतुरूष्मा महाप्रभुः ।
यत्सत्त्वे प्राणसञ्चारो यदसत्त्वे न तद्गतिः ॥ ७१ ॥

आयामैर्योगिनस्तस्मात् प्राणानां परमात्मनाम् ।
उष्माणमेकमेवेशमन्तःस्थं समुपासते ॥ ७२ ॥

अन्नाद् गौरवमासाद्य जलादासाद्य मार्दवम् ।
तेजसस्तापमासाद्य वायुश्चरति विग्रहे ॥ ७३ ॥

तदित्थं पञ्चभिर्भूतैः पिण्डितेऽस्मिन् कलेवरे ।
चितिशक्तिः क्रियाशक्तिर्जायेते किण्वशक्तिवत् ॥ ७४ ॥

किमयुक्तमिह प्रोक्तं प्राक्तनैश्चारुवाग्वरैः ।
येनैते खलु निन्द्यन्ते वन्दनीया मनीषिणः ॥ ७५ ॥

( चार्वाकाणां समर्थिकोपनिषद् अथवा चार्वाकवेदान्तसमन्वयः )

'विज्ञानघन एतेभ्यो भूतेभ्यो जायते पुरा ।
तान्येवानुविनश्यँश्च प्रेतो न ज्ञायते ततः' ॥ ७६ ॥

इत्युक्त्वा याज्ञवल्क्योऽपि मैत्रेयीमाद्यवेदवित् ।
चितिशक्तिं क्रियाशक्तिमैश्वरीं शक्तिमभ्यधात् ॥ ७७ ॥

भूतानां ब्रह्मरूपत्त्वात्तच्छक्तिर्ब्रह्मणो हि सा ।
चितिशक्तिः क्रियाशक्तिस्तस्माच्छक्ती परेशितुः ॥ ७८ ॥

अत एव हि जीवानामसङ्ख्यत्वं च नित्यताम् ।
प्रत्यूचुः श्रुतयः प्रायस्तत्र तत्र स्थले स्थले ॥ ७९ ॥

"न प्रेत्य संज्ञाऽस्ति,' भवान् इति यत् प्राह तेन माम् ।
अमूमुहद्," इति त्वाह मैत्रेयी यावदीश्वरम् ॥ ८० ॥

याज्ञवल्क्यं, तदा सोऽसौ मुनिराड् यदुदाहरत् ।
अज्ञानध्वान्तनाशाय ज्ञातव्यं तद् ध्रुवं बुधैः ॥ ८१ ॥

न मोहजननायैतद् याज्ञवल्क्योऽब्रवीन्मुनिः ।
विज्ञानानन्दलाभार्थमुपायं त्वलमब्रवीत् ॥ ८२ ॥

( जीवानां नित्यत्वस्यासङ्ख्यत्वस्य च खण्डनम् ॥ )

मन्येत यदि जीवानामसङ्ख्यत्वं च नित्यता ।
तदा द्वैतं स्वतःसिद्धं कःपुमान् हर्तुमर्हति ॥ ८३ ॥
द्रष्टारः स्युस्तदाऽनन्ता घ्रातारः स्युरसङ्ख्यकाः ।
श्रोतारश्चाभिवक्तारः स्युरसंख्याश्च वेदिनः ॥ ८४ ॥
एकमेवाऽद्वितीयं च यद् ब्रह्म समुपास्यते ।
अद्वितीयत्त्वमेकत्त्वं तस्य तस्मान्निहन्यते ॥ ८५ ॥
तस्मान्न जीवो नामास्ति पदार्थः कोऽपि तादृशः ।
यः प्राणधारणादन्यश्चितिशक्तेः परोऽथवा ॥ ८६ ॥
प्राणधारणशक्तिः सा चितिशक्तिरथापि वा ।
पाञ्चभौतिकमाश्रित्य यावत्तिष्ठति विग्रहम् ॥ ८७ ॥
तावत्तान्मात्रिकस्त्वेष देहो जीव इतीर्यते ।
शक्तिद्वयक्षये चैष मृत इत्यभिधीयते ॥ ८८ ॥

( पुनर्जन्मवादखण्डनोपक्रमः )

तस्मान्न जायते कोऽपि पृथगात्मेशितुः परः ।
न वेशितुः परः कोऽपि विलयं याति देहभृत् ॥ ८९ ॥
जायन्ते बुद्बुदा यद्वत् प्रलीयन्ते पुनर्यथा ।
तथा जीवाः प्रजायन्ते प्रलीयन्ते पुनस्तथा ॥ ९० ॥

बुद्बुदत्वं तरङ्गत्वं स्वभावः सागराम्भसः ।
यथा, तथा मनुष्यत्वं पशुत्वं परमेशितुः ॥ ९१ ॥

पुनर्जन्म पुनर्मृत्युरित्येष तु महानयम् ।
व्यामोहो भ्रामकः सर्वजन्तूनामयशस्करः ॥ ९२ ॥

( देहात्मवादः, चेतनोत्पत्तिर्वा )

तस्मात्तान्मात्रिकेणैव प्राणशक्तिः सहागता ।
चितिशक्तिक्रियाशक्ती अप्येतेन सहागते ॥ ९३ ॥

तान्मात्रिकस्य सूक्ष्मत्वात् सूक्ष्मास्ताः शक्तयः पुरा ।
अव्यक्ता बिन्दुमध्यस्थाः शनैर्व्यक्ता भवन्ति हि ॥ ९४ ॥

देहं धातुमिमातिस्त्रः क्षमन्ते शक्तयो यदा ।
स्वातन्त्र्येण, तदा जीवो बहिरायाति मन्दिरात् ॥ ९५ ॥

चितिशक्तेस्तदा लोके द्वे वृत्ती भवतः स्फुटे ।
एकाऽऽनुकूल्ये शान्ताख्या प्रातिकूल्ये त्वशान्तिदा ॥ ९६ ॥

स्वपित्येष श्वसित्येष हसत्येष क्षणे क्षणे ।
क्रीडत्येष यदा वृत्तिश्चितेः शान्ता प्रवर्तते ॥ ९७ ॥

अशान्तायां तु तद्वृत्तौ रोदित्येष, न हृष्यति ।
पाणिपादमसौ धुन्वन् दुःखमाविष्करोति च ॥ ९८ ॥

द्वाभ्याममूभ्यां वृत्तिभ्यां जातमात्रः स चेतनः ।
निजाश्रयमिमं देहं पुष्णात्यविरतश्रमः ॥ ९९ ॥

शक्तित्रये च देहे च समुद्भाव्य मृषा भिदाम् ।
पोष्यपोषकभावोऽसौ बोधाय परिकल्पितः ॥ १०० ॥

वस्तुतस्तु सहैवैताः शक्तयः स्वेन वर्ष्मणा ।
क्रमाद् विकासमायान्ति वृक्षाङ्गानि यथा क्रमात् ॥१०१॥

इति तृतीयः परिच्छेदः ॥

अथ संस्कारविचारो नाम चतुर्थः परिच्छेदः ॥

( प्राक्तनसंस्कारखण्डनम् )

नैतस्यां चेतनाशक्तौ संस्काराः सन्ति केचन ।
प्राक्तना, यैरिमां शक्तिं मन्येमहि पृथक् तनोः ॥ १०२ ॥

मातापित्रोर्यथा देहो यथा शक्तिः क्रिया मतिः ।
तथा तथा हि जातस्य देहशक्तिक्रियादयः ॥ १०३ ॥

मानवान्मानवस्तस्मात् पशुभ्यः पशवस्तथा ।
पक्षिभ्यः पक्षिणः कीटाः कीटेभ्यः प्रभवन्ति हि ॥ १०४ ॥

प्राक्तनं लिङ्गमाश्रित्य जीवो जायेत चेत्पुनः ।
देहान्तरे तदा लिङ्गं प्राक्तनं विकसेत् क्रमात ॥ १०५ ॥

ततश्च मानवं लिङ्गमाश्रितो जीव एष वः ।
सिंहयोनौ समुत्पद्य मानवाङ्गैर्न हीयताम् ॥ १०६ ॥

पशुभ्योऽपि ततःप्रायो जायेरन् मानवा भुवि ।
मानवेभ्यश्च पशवः पक्षिभ्यः पशुमानवाः ॥ १०७ ॥

तस्मान्न प्राक्तनं किञ्चिल्लिङ्गमस्तीह देहिनः ।
न वा लिङ्गभृदन्योऽस्ति पित्रोः कामात्पुरातनः ॥ १०८ ॥

( जातेर्द्वैविध्यम् )

पञ्चभूताऽऽत्मकस्त्वेष परमात्मा परोऽव्ययः ।
बीजस्थां जातिमेकैकां पुष्णात्यहरहः प्रियाम् ॥ १०९ ॥
घनीभूतरसा जातिर्बीजमध्ये व्यवस्थिता ।
अनभिव्यञ्जितरसा जातिरव्यक्तमध्यगा ॥ ११० ॥
अव्यक्तमध्यगोपेत्य बीजमध्यगतां ततः ।
लब्ध्वैकरसतां तत्र रसवृद्धिं तनोत्यसौ ॥ १११ ॥
जातिरेषा च बीजस्था तन्मात्रेभ्यो न भिद्यते ।
व्यक्तिस्थाऽपि यतः सैषा नाना व्यक्तीःप्रसूयते ॥ ११२ ॥
एकं बीजमनन्तानां बीजानामुद्भवे क्षमम् ।
तन्मात्रैः पुष्यमाणत्वादतः सद्यः प्रजायते ॥ ११३ ॥
जातौ तु परिपुष्टायां तस्यां कामः प्रजायते ।
स एव कामस्तज्जातेर्नित्यत्वाय विचेष्टते ॥ ११४ ॥
जातेर्नित्यत्वयोगाय कामो व्यक्तिं प्रसूयते ।
यस्यां व्यक्तावियं जातिः समवेता समेधते ॥ ११५ ॥
तदेवमेषा सा जातिर्नित्याऽनित्यात्स्वकामतः ।
चेष्टमानात पुनर्व्यक्तिं व्याप्य सन्तिष्ठते मुदा ॥ ११६ ॥

जातायां जातमात्रायामतो व्यक्तौ पुरातनाः ।
संस्काराः सन्ति चेत्प्रायो जातिजा नेतरे ततः ॥११७॥

जातिजा अपि संस्कारा जननात् परतः क्रमात् ।
विकसन्ति, यथा कायः क्रमशो विकसत्यसौ ॥११८॥

अत एव मनुष्येभ्यो जायमानोऽपि मानवः ।
न मानवं न वा जीवमात्मानं वाऽभिमन्यते ॥११९॥

'अहमस्मी'ति या वृत्तिः साऽपि कालेन गच्छता ।
शनैः शनैरुदेत्यस्य शिशोः प्रायेण लालनात् ॥१२०॥

( स्तन्यपानस्यास्वाभाविकत्वम् )

जातमात्रो न जानाति स्तन्यपानक्रियामपि ।
धात्रीभिर्मातृभिस्तस्मात् पाय्यते प्राग् गुडस्तनी ॥१२१॥

मातृभिःशिक्षितःपश्चात् स्तन्यपानाय चेष्टते ।
नैवानुमापिका तस्मात् संस्काराणामियं क्रिया ॥१२२॥

सोमप्रियत्वात्तापस्य तापो रसजिघृक्षया ।
जातं धाययति स्तन्यमत्र कस्ते मुधा भ्रमः ॥१२३॥

मातुः प्रेरणयैवैष सिंहशावोऽप्यरण्यजः ।
स्तन्यमिच्छति, नैवात्र संस्कारः कोऽपि कारणम् ॥१२४॥

गर्भाशयगतं दुःखं कल्पयित्वा कवीश्वराः ।
भाययन्ति पुरा जीवान् विनेतुं नृपशासनात् ॥१२५॥

( जातमात्रे प्राक्तनसंस्काराणामभावः )

तस्मादेष शिशुर्जातो जातमात्रो निराकुलः ।
निरहन्तो निर्ममत्वः शुद्धः सच्चिन्मयो मतः ॥१२६॥

प्राक्तनैः कैश्चनाऽप्येष साधुभिर्वाऽप्यसाधुभिः ।
युज्यते न हि संस्कारैर्यतो ह्येष नवोदितः ॥१२७॥

नवोदितानि भाण्डानि शिल्पी संस्कुरुते यथा ।
पितरः स्वजनाः सर्वे संस्कुर्वन्ति तथा शिशून् ॥१२८॥

पितॄणां पोषकाणां च परितो वर्तिनां तथा ।
संस्कारैः संस्कृतो बालश्चात्मानं प्रतिपद्यते ॥१२९॥

आत्माऽनुभवनात् पश्चादहन्तां प्रतिपद्यते ।
अहन्तया ममत्त्वं च शनकैरुपपद्यते ॥१३०॥

अहन्ताद्या ममत्वाद्या वृत्तयः क्रमशस्ततः ।
विकसन्ति यथाकालं बीजाङ्कुरफलादिवत् ॥१३१॥

अमीभिः किल संस्कारैः पातितैः पितृभिःपुरा ।
आत्मानं मन्यते जीवो देवं वा दानवं नरम् ॥१३२॥

( ब्राह्मणत्वादीनां काल्पनिकत्वम् )

पितॄणामेव संस्काराद् राजानं मन्त्रिणं गुरुम् ।
ब्राह्मणं क्षत्रियं वैश्यमात्माऽऽत्मानं प्रपद्यते ॥१३३॥

गौडः सारस्वतश्चायं श्रीगौडो मोढ एषकः ।
श्रीमाली नागरश्चाहम्—उदीच्यो द्राविडस्त्वयम् ॥१३४॥

कोङ्कणस्थः कराडोऽयं देशस्थोऽयमिति भ्रमैः ।
मिथ्याभेदास्तता लोके केवलं क्लेशकारिणः ॥१३५॥

पाठयन्ति यथा पाठान् पितरः शैशवे शिशुम् ।
तथाऽऽत्मानमसौ मत्वा विहरत्यस्मितातनुः ॥१३६॥

वस्तुतस्तु न सा बुद्धिश्चितिशक्तौ स्वभावजा ।
संसर्गादेव शनकैरर्भकाणां प्रजायते ॥१३७॥

( वृत्तिविवरणम् )

चितिशक्तिः सदा स्फीता शुद्धा निश्चलचन्द्रिका ।
जातमात्रस्य मृदुला देहे ज्योतिरिवैधते ॥१३८॥

यथा वातेन संयोगाज्ज्योतिः किञ्चन कम्पते ।
तथा विषयसंसर्गाच्चितिशक्तिः प्रकम्पते ॥१३९॥

चितिशक्तेः प्रकम्पोऽसौ विषयाकर्षणोद्भवः ।
वृत्तिराख्यायते लोके चित्तस्य मनसोऽथवा ॥१४०॥

जातमात्रोऽपि चाण्डालादतः साधूत्तमो भवेत् ।
ब्राह्मणाज्जातमात्रोपि तेन चाण्डालतामियात् ॥१४१॥

चाण्डालत्वे द्विजत्वे वा संसर्गो हेतुरुच्यते ।
पूर्वजन्मागतं किञ्चित् कारणं नेह विद्यते ॥१४२॥

( फलभेदे—ऐहिकानामेव सूक्ष्माणां संस्काराणां कारणत्वम् )

इतरस्यां (इतरायां) प्रसूतोऽपि ऐतरेयो महानभूत् ।
दासीतो लब्धजन्मापि किन्नाऽभून्नारदो मुनिः ॥१४३॥

आदानात् पैत्रदायस्य धनिनस्तनयो धनी ।
विदुषस्तनयो विद्वान् निर्धनस्य च निर्धनः ॥१४४॥

निर्धनाद्धनवन्तोऽपि जायन्ते यदि सूनवः ।
ऐहिकाः खलु सम्बन्धाः सूक्ष्माः सन्तीह हेतवः ॥१४५॥

श्रीमत्सयाजिरावोऽसावुच्यते स्म सुनिर्धनः ।
राजवंशोद्भवत्वात्तु राजाऽभूत्स विचक्षणः ॥१४६॥

राजवंशोद्भवोऽप्येष जूनागढमहीपतिः ।
नीचैश्चालितसद्बुद्धिर्ननाश निजराज्यतः ॥१४७॥

धनिनामप्यधनिकास्तनयाः सन्ति चेत् क्षितौ ।
जननात्परतो नीचैः संसर्गस्यैव तत्फलम् ॥१४८॥

विदुषामप्यविद्वांसस्तनयाः सन्ति विश्रुताः ।
विद्वांसश्चाप्यविदुषां पितृणां तनयाः श्रुताः ॥१४९॥

भीरूणां तनयाः शूराः शूराणां भीरवः सुताः ।
अभक्तानां सुता भक्ता भक्तानां चाऽप्यभक्तयः ॥१५०॥

अत्रैतादृक्षु भेदेषु देशकालार्थयोगतः ।
सूक्ष्माः स्थूलाश्च संसर्गा ऐहिकाः सन्ति हेतवः ॥१५१॥

देशकालार्थसंयोगाज्जातानामिह बोधने ।
संस्काराणामशक्तास्तु वयं प्राग्जन्म मन्महे ॥१५२॥

( प्राग्जन्मनः स्वीकारे–उपस्थिता काचित् प्रश्नावली )

कः प्राग्जन्मनि सन्नासीत्? कीदृशः? किंप्रमाणकः?
एष नित्योऽथवाऽनित्यो? गुणैः कैस्कैः स युज्यते? ॥१५३॥
स नित्यगुणकः किंवाऽप्यनित्यैर्युज्यते गुणैः?
संस्कारैस्तस्य सम्बन्धो नित्यः किंवाऽप्यनित्यकः? ॥१५४॥
संस्काराणामधिष्ठानमेष किं वेतरन्मतम्?
क्लेशकर्माशया धर्माः किं चित्तस्याथवा सतः? ॥१५५॥
संस्कारपतनात् पूर्वं कस्मादेष महीं गतः?।
शुद्धे संस्कारहीनेऽस्मिन् कुतः संस्कारभावना? ॥१५६॥
अस्वतन्त्रः स्वतन्त्रो वा देहान्तरनिवेशने ।
देहान्तरेण सम्बन्धः कथमेतस्य जायते? ॥१५७॥
प्राग्जन्मनि सतैतेन विनाऽप्येतत् कलेवरम् ।
किन्तु सञ्जायते पूर्वं, परतो वा, सहैव वा? ॥१५८॥
किमेतेन सता योगाद् विनाऽप्येतत् कलेवरम् ।
एधितुं वर्धितुं चाऽपि शक्तं किं वाऽप्यशक्तिकम् ॥१५९॥
इत्यादयस्त्वसंख्येयाः प्रश्नाः प्रादुर्भवन्ति नः ।
यदि प्राग्जन्म जीवस्य पुनर्जन्म च मन्यते ॥१६०॥

तस्मान्नैवास्ति संस्कारः प्राक्तनः कोऽपि जन्मनः ।
येन वैविध्यमेतस्य जगतः सिद्धिमाप्नुयात् ॥१६१॥

( जगद्वैविध्यकारणम् )

वैविध्ये त्विह संसर्गाः साधवोऽसाधवस्तथा ।
स्थूलाः सूक्ष्मा इहोद्भूताः सन्ति सत्या हि हेतवः ॥१६२॥
देशभेदात् कालभेदात् भेदाच्चैवार्थसञ्चितेः ।
वैविध्यानीह जातानि कल्पनामतिशेरते ॥१६३॥

( वृद्धोपदेशाद् भेदप्रतीतिः )

एकैव चेतनाशक्तिश्चितिशक्तिश्चितिस्तथा ।
चित्तं मनो मतिश्चेतो बुद्धिराख्यायते बुधैः ॥१६४॥
तस्यामस्यां विशुद्धायां निर्मलायां परेशितुः ।
चन्द्रिकायां यथा त्वर्था निपतन्ति शनैः शनैः ॥१  ॥
तथा तथेयं विविधविषयाकारतां गता ।
भेदप्रतीतौ भवति निदानं सर्वदेहिनाम् ॥१६६॥
चार्वाकोऽयमयं बौद्धो जैनोऽयं जिनमार्गगः ।
एष श्वेताम्बरधरो नग्न एष दिगम्बरः ॥१६७॥
एष शाक्तो महाहिंस्रः शैवोऽयं दाहभूमिराट् ।
एष पाशुपतो नष्टो नाकुलीशः कपालभृत् ॥१६८॥
सौरोऽयं गाणपत्योऽसौ भगवद्भैरवप्रियः ।
कापालिकोऽयं कुटिलः कर्मठो याज्ञिकोःशठः ॥१६९॥

एते शङ्करशिष्यास्ते केवलाद्वैतवादिनः ।
एते च वैष्णवाः सन्ति विशिष्टाद्वैतवादिनः ॥१७०॥
मायावादित्वमन्येषु समारोप्याभिमानिनः ।
एते सन्ति महात्मानः शुद्धाद्वैतपताकिनः ॥१७१॥
इत्थमस्यां विशुद्धायां चितिशक्तौ स्वपूर्वजैः ।
दुर्भावाः प्रतिपाद्यन्ते शिशूनामेव शैशवे ॥१७२॥
तेनैतेन तथा मिथ्याभाषिणो मानिनो मिथः ।
वाग्विषेण सदा दष्टाः क्लेशमातन्वते मिथः ॥१७३॥
"इयं मज्जननी माता जनकोऽयं पिता मम ।
भ्राताऽयं भगिनी चेयमिमे मे ज्ञातिबान्धवाः ॥१७४॥
गुरुरेष महात्मा मे सतीर्थ्याः सन्ति मे त्वमी ।
अदो मित्रमसौ शत्रुः कलत्रमिदमस्ति मे ॥१७५॥
श्वशुरोऽयमसौ श्यालः श्यालपत्नी पितृव्यकाः ।
भ्रातृव्याः सन्त्यमी सर्वे सपिण्डा गोत्रजाश्च मे" ॥१७६॥
इत्याद्या व्यावहारिक्यो वृत्तयो या भवन्त्यमूः ।
ताः सर्वा अप्यशाश्वत्यः प्रजायन्ते क्रमान्मतौ ॥१७७॥
जननात्परतो नामकरणं द्वादशेऽहनि ।
पितरः कल्पयन्त्यस्य येनाऽसौ परिचीयते ॥१७८॥
यादृशाः खलु संस्काराः पात्येरञ् शैशवे शिशौ ।
तादृशः स भवेदात्मा तारुण्ये वार्धके तथा ॥१७९॥

संस्काराणां महिम्नैव सज्जना दुर्जनास्तथा।
सञ्जायन्ते महात्मानो दुरात्मानोऽथवा जनाः ॥१८०॥
वन्या अपि महाहिंस्राः पशवो ग्रामसेवया।
वारणाः शूकराःश्वानो वश्याः पोष्या भवन्ति च ॥१८१॥
ऋषीणां तापसानां च संसर्गाद् गृध्रराडयम्।
जटायुर्युयुधे शूरो रावणेन दुरात्मना ॥१८२॥
शुद्धैरार्षैः सुसंस्कारैः संस्कृतो रघुनन्दनः।
भगवानभवद्रामः सर्वलोकनमस्कृतः ॥१८३॥
इत्थं भेदानुपाश्रित्य विषयाणामियं मतिः।
एका प्रदीपज्वालेव विविधेवानुभूयते ॥१८४॥
सेयं मतिश्चितिः संवित् स्वयं ज्योतिः परात्मनः।
चिदाख्यया समग्रासु श्रुतिष्वाद्यासु गीयते ॥१८५॥
एकस्मादेव कार्पासाद् वर्तिता दीपवर्तिकाः।
एकाऽऽज्यपात्रे निहिताः सन्दीप्यन्ते यथा पृथक् ॥१८६॥
तथा तन्मात्रसम्भूताश्चिन्मये भूतपञ्चके।
प्राणन्त्यमी पृथक् कायाः प्राणशक्तिक्रियाश्रयाः ॥१८७॥
तदित्थं भौतिको देहः प्राणैश्चेतनयाऽन्वितः
ईश्वरांशस्वरूपोऽस्ति वन्दनीयो महात्मनाम् ॥१८८॥
जरायुजाऽण्डजोद्भिज्जस्वेदजत्वादयस्तु याः।
विविधा जातयस्तास्ताः सन्ति तस्य विभूतयः ॥१८९॥

इति चतुर्थः परिच्छेदः ॥

अथ जडचेतनयोरभेदसाधनं नाम पञ्चमः परिच्छेदः ॥

( जडचेतनयोर्भेदस्य खण्डनम् )

अहो वयं तु वेदानामाद्यानामनुयायिनः ।
जडचेतनशब्दाभ्यामर्थभेदान् न मन्महे ॥१९०॥

निष्प्राणो निष्क्रियो देहो यो मृतो जड उच्यते ।
न ततश्चेतनाशक्तिः पृथक् केनापि दृश्यते ॥१९१॥

चेतनायाः क्षयादेष क्षीणशक्तिः शवो मतः ।
शक्तिक्षयान्न सिद्ध्येद्धि शक्तिशक्तिमतोर्भिदा ॥१९२॥

जडसंसर्गशून्याऽपि दृश्येत यदि चेतना ।
तदैतयोः पृथक् सत्ता स्वीक्रियेत कथञ्चन ॥१९३॥

तस्माद् यमात्थ भगवञ् जडं निश्चेतनक्रियम् ।
सोऽप्यस्माकं मते साक्षाद् ईश्वरांशो न संशयः ॥१९४॥

( जडेष्वपीश्वरमतिः )

तस्मादेव वयं भूतग्राममेतं चतुर्विधम् ।
तर्पयामः पृथक् चापि पर्वतान् सरितो द्रुमान् ॥१९५॥

जडचेतनसंज्ञाभ्यां भेदबुद्धिमपोहितुम् ।
स्तम्भान्नरहरिं व्यासः प्रभुः प्रादुरबीभवत् ॥१९६॥

मृदमेव महेशानमानर्च न किमर्जुनः ।
न वालुकामयं किंवा शिवमानर्च पार्वती ॥१९७॥

अष्टमूर्तिः शिवः साक्षात् पुराणेषु सुविश्रुतः ।
एका मूर्तिस्तदीयाऽस्ति तासु देवी वसुन्धरा ॥१९८॥
तस्या अस्याः स्वरूपं ये न विजानन्ति तत्त्वतः ।
त एव हन्त निन्दन्ति मातरं धरणीमिमाम् ॥१९९॥
'आधारभूता जगतस्त्वमेके'त्यादिभाषितैः ।
पृथिवीमेव तामस्तौन्मातरं मुनिपुङ्गवः ॥२००॥
वेदेष्वपि पुरातत्त्वविद आद्या महर्षयः ।
निन्दितां जडवादेन तुष्टुवुर्मातरं महीम् ॥२०१॥
तस्माज्जडत्वमारोप्य यैरियन्त्ववहेलिता ।
पराणूनां महिम्नस्तैर्वयं दूरे निपातिताः ॥२०२॥
तस्माद्दीपाऽऽज्यवर्त्तीनां जडमारोप्यतां पदे ।
चेतना निष्कलङ्का च स्थाप्यतामर्चिषः पदे ॥२०३॥
दीपाऽऽज्यवर्तीत्यागेन यथैवार्चिर्न दीप्यते ।
तथाऽऽधिभौतिकं त्यक्त्वा नैवास्त्याध्यात्मिकं जगत् ॥२०४॥

( अध्यात्माधिभूतयोरभेदः )

तस्मादध्यात्मशुश्रूषा तवाऽस्ति यदि सन्मते ।
आधिभौतिकमाधारं तस्याऽऽराधय विग्रहम् ॥२०५॥
गूढः स भगवानत्र प्रकृतौ चेतनामयः ।
सक्रियः प्राणभृद् भूत्वा प्रादुर्भवति सर्वदा ॥२०६॥

( उच्चनीचभावनानिरासः )

"अयं शूद्रःश्वपाको॑ऽस्ति पूर्वजन्मार्जितादघात् ।
कपूयां योनिमापन्नः कथं सख्येन युज्यताम् ॥२०७॥
वयं तु कर्मठा विप्राः पूर्वपुण्योदयादिमाम् ।
पवित्रां योनिमापन्नाः कैस्तुलार्हाः सुखार्हणाः ॥२०८॥
ईश्वरोऽस्ति परो ह्यस्माज्जगतः कुम्भकारवत् ।
कर्ता विश्वस्य, येनैते वयमुच्चतमाः कृताः ॥२०९॥
नीचा यूयं वयन्तूच्चा अनियम्या नियामकाः" ।
एतास्तु कलिजातानां धनान्धानां मृषा गिरः ॥२१०॥
आधानाच्चौलपर्यन्तैः संस्कारैःखलु संस्कृतः ।
गुरुमभ्येत्य मेधावी ब्रह्मचर्यं चिनोति यः ॥२११॥
यस्तूपयमनादर्वाक् समस्ता अपि योषितः ।
मातुस्तुल्याः स्वसुस्तुल्याः परिपश्यति बुद्धिमान् ॥२१२॥
उद्वाहात्परतश्चापि भार्यायामेव केवलम् ।
निजायां रतिमातन्वन् अन्या मातृरवेक्षते ॥२१३॥
द्वितीयमाश्रमं यस्तु विधिनेत्थं सुनिर्वहन् ।
पुत्रेषु कार्यसम्भारं यश्च प्राज्ञो निरस्यति ॥२१४॥
ततश्च लोभमोहादि—पाशानुच्छिद्य बुद्धिमान् ।
त्यक्तवित्तेषणो देशसेवायामनुरज्यति ॥२१५॥

स त्यागी स महानात्मा परमात्मा स चेश्वरः ।
कस्य नो वन्दनीयौ स्तस्तस्य पादौ महात्मनः ॥२१६॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा काममस्तु सः ।
यस्तु सेवासु देशस्य निरतः प्रभुरेव सः ॥२१७॥

इतिं पञ्चमः परिच्छेदः ॥

## अथ पञ्चविधेश्वरोपासनोपन्यासो नाम षष्ठः परिच्छेदः

( ईश्वरस्य पञ्चरूपत्वम् )

अतो वयं तु वेदज्ञाः पञ्चधेशमुपास्महे ।
पञ्चरूपं परात्मानं जडचेतनमव्ययम् ॥२१८॥
पञ्चभूतात्मकं त्वेकं जडं यद्रूपमीशितुः ।
सद्द्रव्य-भाव-प्रकृतिनामभिस्तदुपास्महे ॥२१९॥
मातापितॄन् गुरून्सर्वांस्तेषां सवयसस्तथा ।
समग्रान् रूपमीशस्य द्वितीयं समुपास्महे ॥२२०॥
तृतीयं रूपमीशस्य महामान्या गृहागताः ।
सर्वेऽप्यतिथयः पुण्याः सम्मानार्हास्तृणोदकैः ॥२२१॥
चतुर्थं भगवद्रूपं पुत्राः शिष्यास्तथाऽर्भकाः ।
समस्ता अपि देशस्य पुत्रशिष्यैककोटयः ॥२२२॥
पञ्चमे त्वीश्वरस्यास्य लतागुल्माग्र्यशाखिनः ।
अन्नौषधिरसान् धातून् रूपेऽन्तर्भावयामहे ॥२२३॥

तदित्थं भगवद्रूपं पञ्चधा परिकल्पितम् ।
ध्यानिभिर्योगिभिर्भक्तैर्बहुधा समुपास्यते ॥२२४॥

( भूतानामीश्वरांशत्वम् )

तत्र भूतात्मकस्त्वीशः कस्य न स्यादुपासितः ।
ऋते क्षणिकवादिभ्यो बौद्धेभ्यश्चार्हतां चयात् ॥२२५॥

वस्तुतस्तु स भूतात्मा परमात्मा परोऽव्ययः ।
येन केनापि रूपेण सकलैः समुपास्यते ॥२२६॥

जातमात्रो हि जीवात्मा पशुः पक्षी नरोऽथवा ।
श्वासोच्छ्वासैर्जलादानादुपास्ते केवलं प्रभुम् ॥२२७॥

बौद्धः क्षपणको वा स्यादार्हतो वाऽप्युपोषितः ।
जीवितुं नैष शक्नोति भौतिकोपासनाद् विना ॥२२८॥

राजानः शासतस्तस्मात् प्रजानां हितकाम्यया ।
भूमिवार्यनिलाग्नीनां यतन्ते शुद्धये सदा ॥२२९॥

अभिप्रेतो यथा वायुस्तापो वा निर्विशेद् गृहम् ।
तथा गृहाऽऽश्रमाऽऽरामाः प्रासादा मन्दिराणि च ॥२३०॥

ग्रामा ग्रामटिका राज-धान्यश्च नगराणि च ।
प्रकल्प्यन्ते प्रणीयन्ते देशाः प्रान्ताश्चतुष्पथाः ॥२३१॥

( हरिजनानामस्पृश्यत्वे विचारः )

भूमेरुद्धरणाद्धेतोः पङ्कादतिमलीमसात् ।
शूकरोऽप्यशुचिश्शास्त्रेष्वीश्वरांशोऽभिपूजितः ॥२३२॥

प्रतोलीनां प्राङ्गणानां मार्गाणां शोधकास्ततः ।
नित्यमेते न किं श्लाघ्या भृत्यास्ते भगवत्प्रियाः ॥२३३॥
अहो वयं कथं मूढा ये त्वेतान् भगवत्प्रियान् ।
उपस्कर्तॄन् मलादीनामधमान् कल्पयामहे ॥२३४॥
उपस्कर्तॄनिमानुक्त्वा चाण्डालाञ्श्वपचाँस्तथा ।
भ्रंशयामो मुधा मानात् प्रीतये परदेशिनाम् ॥२३५॥
"शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् ।
वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः" ॥—
इत्यदोवचनेनाऽऽर्यो भगवान्मनुरीश्वरः ।
शूद्राद् ब्राह्मणकन्यायां जातं चाण्डालमूचिवान् ॥२३६॥
वस्तुतस्तु न चैतेषां दीनानां मलवाहिनाम् ।
ब्राह्मणी कापि जननी त्वितिहासेषु बुध्यते ॥२३७॥
कस्मात् पुनरिमेऽनार्याश्चाण्डालाश्चाप्युदीरिताः।
सम्मार्जकाः प्रतोलीनां गृहाणां मलवाहिनः ॥२३८॥
यवनैर्धर्षिताः शूरा ये पुरा शरणं गताः ।
त एव योजिताः पश्चाल्लघिष्ठेष्वेषु कर्मसु ॥२३९॥
तेषामेष तु वर्गोऽस्ति यवनैः प्राक्कदर्थितः ।
यमद्य वयमन्यायास्तिरस्कुर्मः पुरीषवत् ॥२४०॥

( इति षष्ठः परिच्छेदः ॥ )

अथ वर्णानां विनष्टप्रायतानिरूपणं नाम सप्तमः परिच्छेदः ॥

( अस्माकमधार्मिकं जीवनम् )

न वयं मानवं धर्मशास्त्रमुल्लङ्घयामहे ।
ये तु तद्विज्ञतागर्वास्तानिह त्वाहूवयामहे ॥२४१॥
"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ॥—
इत्याह भगवानाद्यो मनुर्मानवधर्मवित् ।
कस्तस्य वचनाद् विप्रो नास्ति शूद्रत्वमीयिवान् ॥२४२॥
'एष विप्रवरः शुद्धः शुद्धः क्षत्रिय एष च ।
एष वैश्यवरः शुद्धः शुद्धश्चैष चतुर्थजः' ॥२४३॥
इत्येतद् वक्तुमीशोऽस्ति किन्नु कोऽपि महीतले ।
वर्तमानामिमां वर्णव्यवस्थां श्लाघते तु यः ॥२४४॥
प्रतिग्रहादिना दग्धब्राह्मणत्वाः पुरोधसः ।
नष्टाचारविचाराश्च किन्न सन्ति स्थले स्थले ॥२४५॥
मनुस्तु भगवानस्तौदश्वस्तनिकमेव हि ।
क्वास्ति तादृक् सुतृप्तात्मा ब्राह्मणो द्विजसत्तमः ॥२४६॥
दृश्यतामर्थसम्पत्तेः काऽप्येषा दुर्मदान्धता ।
यया ब्राह्मणताधर्मः समूलं नाशमापितः ॥२४७॥
गङ्गागोदावरीरेवायमुनातीरवासिभिः ।
किन्न विप्रैश्चिरात् त्यक्ता वेदाः शाखामिता अपि ॥२४८॥

हन्त तैर्धनिकैर्विप्रैरुच्यमानैः कलौ युगे ।
एको गायत्रमन्त्रोऽपि न शुद्धः खलु पठ्यते ॥२४९॥
गङ्गाया विमले तीरे प्रासादे कृतकेतनैः ।
मकाराः किन्न सेव्यन्ते पातिनो ब्रह्मवर्चसात् ॥२५०॥
" विप्रैर्भागवती वार्ता गेहे गेहे जने जने ।
कारिता कणलोभेन कथासारस्ततो गतः " ॥
" न लोकवृत्तं वर्तेत वृत्तिहेतोः कथञ्चन ।
अजिह्मामशठां शुद्धां जीवेद् ब्राह्मणजीविकाम् " ॥
इत्याद्यैर्वचनैरार्या मनुव्यासा महर्षयः ।
कथाकीर्तनवार्ताभिर्निनिन्दुःकिन्न जीविकाम् ॥२५१॥
तथापि कति विप्रेन्द्राः कथाकीर्तनवृत्तिभिः ।
जीवन्तीत्यवगन्तव्यं धर्मरक्षकमानिभिः ॥२५२॥

( मूर्त्तिपूजाया आवश्यकत्वेऽपि तया जीवननिर्वाहस्य गर्हितत्वम् ॥ )

" देवकोशोपजीवी च नाम्ना देवलको मतः " ।
इत्युक्त्वा देवलः श्रीमान् बाह्यान् देवलकानवक् ॥२५३॥
अद्य देवलकानां तु गणनाऽपि सुदुष्करा ।
सम्भवात् सर्वतस्तेषां ग्रामे ग्रामे गृहे गृहे ॥२५४॥
पुराऽऽसन् ब्राह्मणा एव देवद्रव्योपजीविनः ।
अद्य तु क्षत्रिया वैश्याः शूद्रा देवलका अपि ॥२५५॥

ईश्वरप्रणिधानार्थं योगिनो दिव्यदर्शिनः ।
मूर्तिपूजनमाचख्युरुपायं सरलं पुरा ॥२५६॥

एकान्ते स्वगृहे स्वच्छे स्थाने मूर्तेरुपासनात् ।
एकाग्रविषयं चित्तं जायते नाऽत्र संशयः ॥२५७॥

न मूर्तिपूजामेतस्माद् गर्हयामो मनागपि ।
नम्रेण शिरसा चैताः सर्वा मूर्तीरुपास्महे ॥२५८॥

किन्तु तां जीवनोपायं कृत्वा कतिपये जनाः ।
प्रासादमठहर्म्येषु सेवन्ते विषयान् बहून् ॥२५९॥

एकां मूर्तिं पुरस्कृत्य सम्प्रदायप्रवर्तकाः ।
प्रवर्तयन्त्यपठितान् सम्प्रदायान्धकूपके ॥२६०॥

( सम्प्रदायानां देशघातकत्वम् )

नष्टानि धर्मशास्त्राणि वेदाङ्गानि गतानि च ।
दर्शनानि न दृश्यते सम्प्रदायेषु कुत्रचित् ॥२६१॥

निरक्षरोऽपि वाचाटो यदि स्यात्साम्प्रदायिकः ।
स एव वृत्तिमाप्नोति सम्प्रदायानुवर्तनात् ॥२६२॥

अधीतवेदवेदाङ्गो न स्याच्चेत्साम्प्रदायिकः ।
सीदत्यर्थकृशो विप्रः सम्प्रदायविसर्जनात् ॥२६३॥

अहो समृद्धिरेतेषां मन्दिराणां स्थले स्थले ।
परःसहस्रान्विदुषो यया सोतुं प्रभूयते ॥२६४॥

नेयं तथापि कस्यापि बटोः क्षेमाय कल्पते ।
स्वामिनामेव सौख्याय मन्दिराणां प्रवर्तते ॥२६५॥

किन्तु नायमधर्मोऽस्ति पातको देशघातकः ।
यस्याऽऽयतन्ते रक्षायै मिथ्याधर्माभिमानिनः ॥२६६॥

क्षत्रियाणां च वैश्यानां यद् द्विजत्वं श्रुतौ श्रुतम् ।
तच्चापि भ्रंशितं नैव किन्तु लोके प्रदृश्यते ॥२६७॥

राजानो विषयासक्ता वैश्याः स्वार्थैकसाधकाः ।
यतन्ते केवलार्थाय सेवाभावाद्बहिर्मुखाः ॥२६८॥

तदित्थं भ्रंशितां वर्णव्यवस्थां सुचिरादपि ।
कस्माद् रक्षितुमीहन्ते मुधाधर्मान्धलोचनाः ॥२६९॥

अस्यां सुरक्षितायां तु व्यवस्थायामभूदयम् ।
देशो नः पारतन्त्र्याख्यशृङ्खलायां नियन्त्रितः ॥२७०॥

इति सप्तमः परिच्छेदः ॥

अथ—आश्रमाणां नामशेषतानिरूपणं नामाष्टमः परिच्छेदः ॥

आश्रमाणां तु वार्ताऽपि केवलाऽरुन्तुदा सताम् ।
मिथ्याधर्माभिमन्तॄणां मुखमुद्रणकारिणी ॥२७१॥

( प्राचीनो ब्रह्मचर्याश्रमः )

पुराऽऽसन्नाश्रमा दूरे महर्षीणां तु पत्तनात् ।
यत्र पत्तनबालानामभूदध्यापनक्रमः ॥२७२॥

अष्टवर्षवयस्कोऽसौ बालः पितृगृहादमून् ।
आश्रमानभवद् ब्रह्मचारी स्नेहादुपावसन् ॥२७३॥
देशकालोचितास्तत्र सोऽधिगच्छन्नभूत् कलाः ।
विद्याश्च विविधा याभिर्देशगौरवमैधत ॥२७४॥
सपत्नीकाः सपुत्राश्च ऋषयो वीतकल्मषाः ।
लब्धाश्रयाः प्रजाभ्यश्च नृपेभ्यश्चाऽप्यपाठयन् ॥२७५॥
न काऽपि चिन्ताभूत्तेषां वर्णिनां परिपोषणे ।
यतो हि पौरैः श्रीमद्भिरर्थस्तेभ्यो व्यतीर्यत ॥२७६॥
श्रीमतां भूमिपालानां सम्राजामपि सूनवः ।
निर्धनानां सुतैः साकमवसन्नविशेषतः ॥२७७॥
पौराणामर्थराशीनां नाऽभूदन्यस्त्वपव्ययः ।
सीदेयुर्येन ते त्यक्तपितरो ब्रह्मचारिणः ॥२७८॥

( अद्य लक्ष्मीवतां दुश्चेष्टितानि )

अद्य तु श्रीमतां लक्ष्मीरन्यत्राऽन्यत्र योज्यते ।
येन सीदति देशोऽस्मिन् धन्योऽयं प्रथमाश्रमः ॥२७९॥
कश्चिन्मन्दिरसम्पत्तिसमृद्धीनां विवर्धने ।
व्यर्थमर्थव्ययं तन्वन् देशे द्रोहं प्रसूयते ॥२८०॥
कश्चित्तु निरतः श्रीमान् पोषणे साधुमानिनाम् ।
शास्त्रशासनमुत्सृज्य बाल्ये काषायधारिणाम् ॥२८१॥

विहाराणामाश्रमाणां मठानां चाभिवृद्धये ।
कश्चिदर्थव्ययं कुर्वन् नेक्षते प्रथमाश्रमम् ॥२८२॥

यशःकामनया कश्चिद् वञ्चितो द्रव्यलिप्सुना ।
विप्रेणावैदिके मार्गे करोत्यर्थस्य दुर्व्ययम् ॥२८३॥

दातारपदलाभार्थमन्यस्तु कृपणो महान् ।
राजभ्यो वितरन्नर्थं न हि सङ्कोचमञ्चति ॥२८४॥

कश्चिदात्मसुखायैव चिन्वन्नर्थनिधिं पुनः ।
कपर्दिकामपि ददद् बटुभ्यो म्रियते मुधा ॥२८५॥

( प्राचीना ब्रह्मचारिणः )

पुरा तु नाऽऽसीदर्थानामित्थं मिथ्याकृतो व्ययः ।
व्रजेयुर्वर्णिनो येन परेषामुपहास्यताम् ॥२८६॥

वर्णिभ्यश्चापरो नाऽऽसीद्दानीयो दानभागभाक् ।
यथाऽद्य भिक्षवो विप्रा मन्दिराणि च साधवः ॥२८७॥

तत्रर्षिकुलमध्यस्थाः पवित्रा ब्रह्मचारिणः ।
प्रथमं त्वायुषो भागमनयन् गुरुसेवया ॥२८८॥

विद्यामेवाऽनवद्यां तां मन्वाना मातरं निजाम् ।
उपासीना गुरून् प्राज्ञानभवन्सुविचक्षणाः ॥२८९॥

चाणक्यप्रमुखास्तेभ्यो निरयुःस्नातकाः पुनः ।
आश्रमेभ्यो यतःसर्वं जगदेतद् व्यनीयत ॥२९०॥

क्व सन्ति तादृशा अद्य ह्याश्रमाःशान्तवृत्तयः ।
यत्र विद्याःसमस्तास्ताः पाठ्येरन् प्रथमायुषि ॥२९१॥
एक एवाऽऽश्रमः प्रायो हरद्वारेऽद्य दृश्यते ।
ऋषिकुलब्रह्मचर्याऽऽश्रमनाम्ना सुविश्रुतः ॥२९२॥
तत्राऽपि तत्र जातानां पण्डानां दानजीविनाम् ।
ईर्ष्या द्वेषोऽभ्यसूया च किमनल्पा न दृश्यते ॥२९३॥
इत्थमद्य सुविध्वस्तो ब्रह्मचर्याश्रमो महान् ।
मिथ्याधर्मान्धयोधेन न केनाऽप्युज्जिहीर्षितः ॥२९४॥
धर्माभिमानिनामद्य महतामपि सूनवः ।
क्षणेनैवोपनीयन्ते स्नाप्यन्तेऽपि क्षणेन च ॥२९५॥
स्वीयैः साकं नियुद्धार्थमुद्यता ये तु शासकैः ।
सत्यमित्रैरमी कस्मान्नोद्धरन्त्येनमाश्रमम् ॥२९६॥

( गृहस्थाश्रमदुर्व्यवस्था )

गार्हस्थ्ये तु प्रवर्तन्ते स्वभावादेव देहिनः ।
तत्र किञ्चिन्न कर्तव्यमस्ति धर्माभिमानिनाम् ॥२९७॥
वस्तुतस्तु स धन्योऽपि चिरान्नष्टो महाऽऽश्रमः ।
यत्रातिथीनामग्नीनां नष्ट औपासनो विधिः ॥२९८॥

( वानप्रस्थस्य नामशेषता )

यः कष्टबहुलश्चास्ति स्मर्यमाणो हि केवलम् ।
क्वाऽसावद्यास्ति भूपृष्ठे वानप्रस्थाश्रमो महान् ॥२९९॥

पुत्रिणः पौत्रिणश्चापि जरठाःकाममोहिताः ।
किन्न पर्यणयन् कन्या युष्माकं धर्मशासने ॥३००॥

मासान् मासानुपोष्याऽऽत्मविग्रहो येन कर्शितः ।
किमस्ति तादृशः कोऽपि युष्माकं धर्मशासने ॥३०१॥

गृहं गृहजनान् सर्वानुज्झित्वा गृहसम्पदः ।
किन्नु कोपि परित्राणे पीडितानामभूद्रतः ॥३०२॥

भवत्कुटिलटीकाभ्यो निरस्य भयमात्मनः ।
निश्चितध्येयसंसिद्धौ भवतां कोऽभवद्रतः ॥३०३॥

( सन्न्यासस्य दुर्व्यवस्था )

"अश्वालम्भं गवालम्भं सन्न्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्" ॥—
इत्येतेनैकवाक्येन सन्न्यासो वर्जितःकलौ ।
तथाऽपि कति देशेऽस्मिन् सन्ति सन्न्यासिनां मठाः ॥३०४॥

"अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः" ॥—
दं प्राह मनुर्मानवधर्मकृत् ।
तथापि कस्तदादेशमनुतिष्ठति धार्मिकः ॥३०५॥

अद्य यावन्न कोऽप्यासीद् वर्णाश्रमनियामकः ।
येनाऽऽश्रमव्यवस्थेयं छिन्नमूला व्यजायत ॥३०६॥

अगृहीताक्षरोऽप्येष बालो वो धर्मशासने ।
प्राभवन्मुण्डितो धर्तुं मिथ्याकाषायकञ्चुकम् ॥३०७॥

मुण्डितास्तरुणाः साधुनामानो बहुभाषिणः ।
विचरन्ति न किं लोके प्रमदासु विशेषतः ॥३०८॥

वार्ताभिर्भजनैर्गानैर्मोहयन्तो निरक्षरान् ।
चिन्वन्ति न किमर्थाँस्ते गृहिभ्यो गृहलालसाः ॥३०९॥

अष्टोत्तरशतश्रीका गीताव्यासाः प्रकीर्तिताः ।
हंसाः परमहंसाश्च तादृशा मण्डलेश्वराः ॥३१०॥

ते परिव्राजकाचार्यास्ते जगद्गुरवस्तथा ।
कथिताः पूजिताः किन्न युष्माकं धर्मशासने ॥३११॥

किमतो नैव मन्यन्ते भवन्तः सुविचक्षणाः ।
यदद्य नास्ति कुत्रापि वर्णाश्रमरतिर्जने ॥३१२॥

सर्वत्र दम्भः कापट्यं धूर्तता चापि पूज्यते ।
न स्वार्थसाधनादन्या चेष्टा कापि च दृश्यते ॥३१३॥

( वर्णाश्रमधर्मध्वंसे हेतुः )

वर्णानामाश्रमाणां च व्यवस्थापनमर्थतः ।
पुराऽऽसीत् प्रथमो धर्मो भूभुजां, प्रकृतेर्न तु ॥३१४॥

वर्णाश्रमव्यवस्थायां ये समर्थास्तु भूभुजः ।
त एव तद्विघातस्य पुराऽजायन्त हेतवः ॥३१५॥

कथं पुनरिमे वर्णा आश्रमाश्चाभ्युदीरिताः ।
सुरक्षिताः प्रवर्तेरन् भारते भग्नशासने ॥३१६॥
प्राबल्यात् सम्प्रदायानां क्रमशो धर्मविप्लवः ।
यश्चाऽजायत कस्याऽऽस्ते सोऽविज्ञातो महामतेः ॥३१७॥
सौगतैः पृथिवीपालैश्चार्वाकाः खण्डिताः पुरा ।
नाऽद्य तत्संस्कृतेश्चिह्नं किञ्चिदप्यवशेषितम् ॥३१८॥
वेदाश्रितत्वात्तेषां तु चार्वाकाणां विपश्चिताम् ।
वेदानामपि विध्वंसे किंकिं चक्रुर्न सौगताः ॥३१९॥
सौगतेष्वपि भूपेषु मतभेदोऽभ्यजायत ।
ततश्चतुर्विधैर्बौद्धैः परस्परमयुध्यत ॥३२०॥
आर्हतैरपि भूपालैः सम्प्रदायप्रचारकैः ।
वर्णाश्रमव्यवस्थायां कुठारः किं न पातितः ॥३२१॥
कुमारिलाद्यैराचार्यैर्बोधिता अपि भूभृतः ।
नाऽभवँस्तान् पुनर्वर्णान् व्यवस्थापयितुं क्षमाः ॥३२२॥
प्राबल्याज्जीववादस्य केचिदासन्नवैदिकाः ।
शत्रवो विप्रवर्याणां स्वर्गार्थं प्रयताऽऽत्मनाम् ॥३२३॥
जीववादविरोधाय प्रादुर्भूतेऽपि शङ्करे ।
वर्णानामाश्रमाणां च नाऽभूद् योग्या व्यवस्थितिः ॥३२४॥
ब्राह्मणान् क्षत्रियान् वैश्याञ् शूद्रानुन्मार्गगामिनः ।
नियन्तुं प्राभवन्भूपाः, नैवाऽऽचार्या न च द्विजाः ॥३२५॥

त एव भूपा उन्मत्ता यदाऽऽसन् पृथिवीतले ।
कथं पुनरिमे वर्णा विनीयेरन् विशृङ्खलाः ॥३२६॥

प्रमत्ताः पृथिवीपालाश्चाणक्येन विपश्चिता ।
उत्खाताः किन्न बुध्यन्ते नन्दा नामैतिहासिकैः ॥३२७॥

ततस्तु शनकैरत्र यवनानां प्रवेशतः ।
वर्णाश्रमव्यवस्थायां मनः केनाऽन्वधीयत ॥३२८॥

यवनेषु प्रविष्टेषु भारतीया महीभुजः ।
खण्डिताः शरणं याताः शेकुर्नैनां सुरक्षितुम् ॥३२९॥

इत्थं प्रदग्धा सन्दिग्धा पातिनी देशघातिनी ।
भवतामभवद्वर्णव्यवस्था दुर्व्यवस्थिता ॥३३०॥

गौराङ्गैः परदेशीयैर्मिथो विद्वेषकारिणीम् ।
तां पुनस्तादृशीं दृष्ट्वा प्रयेते परिरक्षितुम् ॥३३१॥

अङ्गानीव तयाभूवन् भिन्नानि हृदयानि नः ।
परस्परं पृथग्भूतममन्यामहि चात्मनः ॥३३२॥

( अधर्मे धर्मभावनायाः परिणामः )

आत्मानं धार्मिकं मत्वा भ्रातरं चाऽप्यधार्मिकम् ।
बहिष्कर्तुं वयं मूढाः प्रवृत्ताः क्षुद्रभावनाः ॥३३३॥

बहिष्कृताः पुनस्तेऽपि भ्रातरो नः प्रकोपिताः ।
यावनं धर्ममाश्रित्य किं नाऽस्मानप्यपीपिडन् ॥३३४॥

इत्थं खण्डितयैवैष देशो वर्णव्यवस्थया ।
खण्डितो हन्त नाद्यापि सुखं शान्तिमुपाश्नुते ॥३३५॥
तामेव खण्डितामङ्गप्रत्यङ्गैर्नष्टचेतनाम् ।
भवन्तः पातुमीहन्ते क्लिष्टां वर्णव्यवस्थितिम् ॥३३६॥
प्रदग्धस्तम्भकुड्यान्तर्द्वारवातायनच्छदाम् ।
नाधितिष्ठन्ति धीमन्तो गृहश्रेणीं कदाचन ॥३३७॥
किन्तु धन्या भवन्तो ये दग्धबीजां व्यवस्थितिम् ।
वर्णाश्रमाणामाश्रित्य योद्धुमन्यैर्व्यवस्थिताः ॥३३८॥
नापशब्दप्रयोगेभ्यो जिह्वा जिह्रेति वः क्वचित् ।
दोषारोपणवेलायां न संकुचति वो मनः ॥३३९॥
हिंसार्थमपि सिद्धानां योगिनां च महात्मनाम् ।
अधन्यौ वः करौ नैव कम्पेते कर्कशात्मनाम । ॥३४०॥
वर्णाश्रमव्यवस्थाया रक्षणव्याजमाश्रितैः ।
सर्वोऽपि मानवो धर्मो युष्माभिर्व्याकुलीकृतः ॥३४१॥

( हिन्दुत्वाभिमानः )

भवतां धर्मशास्त्रेषु हिन्दुशब्दो न विद्यते ।
तथापि भवतां धर्मो हिन्दुधर्मो निगद्यते ॥३४२॥
हिन्दुशब्दो निकृष्टार्थो यवनानां प्रयोजितः ।
तथापि तत्र वःकीदृगनुरागः प्रदृश्यते ॥३४३॥

"हिनस्ति हितमात्मीयं दुनोति दनुवन्निजान् ।
एष हिन्दुरिति ख्यातो न न्यूनस्त्वाततायिनः" ॥३४४॥
इति या हिन्दुशब्दस्य परिभाषा प्रकीर्तिता ।
महात्मनो वधेनैषा युष्माभिः सार्थकीकृता ॥३४५॥
सिन्धुशब्दादपभ्रष्टो हिन्दुशब्दो यदीष्यते ।
अपभ्रष्टादतः शब्दात् सिन्धुशब्दःप्रयुज्यताम् ॥३४६॥
शुद्धं सिन्धुपदं दूरे हित्वा भ्रष्टानुरागतः ।
अहो भ्रष्टा मतिर्भाति भवतां वृद्धघातिनाम् ॥३४७॥
किञ्च भोः सिन्धुशब्दोऽपि न जातिवचनः क्वचित् ।
न धर्मवचनश्चापि क्वचिद्वेदेषु दृश्यते ॥३४८॥
कुतः पुनस्ततो भ्रष्टो हिन्दुशब्दो दुरर्थकः ।
जातेर्धर्मस्य वाऽकस्माज्जायेतार्थस्य वाचकः ॥३४९॥
ये परे सन्ति शस्त्रास्त्रैः सज्जा युष्मदरातयः ।
तेषां न केशमपि भोः कुटिलीकर्तुमीश्वराः ॥३५०॥
ये परित्यक्तशस्त्रास्त्राः युष्मत्सेवैकबुद्धयः ।
तानेव हन्त स्वभ्रातॄन् भ्नतां नास्ति च वत्रपा ॥३५१॥
न चिन्ता धर्मशास्त्राणां न ऋषीणां तपस्विनाम् ।
न पूर्वजानामाचार—विचाराणां विलोक्यते ॥३५२॥
युष्मासु, सुखसम्पत्तिसमृद्धीनां हि चिन्तना

केवला दृश्यते यास्ति दीनपीडनकारिणी ॥३५३॥
अत्याचरितमत्यर्थं देशे धर्मे च संस्कृतौ ।
भवद्भि रभवद् यस्माद् विनिपातो हि सर्वतः ॥३५४॥

( हरिजना देवमन्दिराणि च )

युयुत्सवस्तु ये शूद्रा यवनैर्बलदर्पितैः ।
बन्दीकृताः, स्वसेवासु नीचासु च नियोजिताः ॥३५५॥
त एव प्रेयसामात्मप्राणानां त्राणकारणात् ।
मलनिर्वहणेनापि न रामं व्यस्मरन्निजम् ॥३५६॥
अहो भवद्भिः श्रीमद्भि स्तेषु दोषाः प्रकल्पिताः ।
चाण्डालत्वं श्वपाकत्वं तेषु चारोपितं द्रुतम् ॥३५७॥
यादृशैस्तादृशैस्तैस्तु पातितैरपि सर्वतः ।
रामकृष्णशिवाम्बानां नाम्नैवाऽऽत्मा समुद्धृतः ॥३५८॥
हरिरूपजगत्सेवाकरणात्तेऽन्त्यजातयः ।
हरिदासा हरिजना अद्य लोके प्रकीर्तिताः ॥३५९॥
" ब्रह्महा पितृहा गोघ्नो मातृहाऽऽचार्यहाऽघवान् ।
श्वादः पुल्कसको वापि शुद्ध्येरन् यस्य कीर्तनात् " ॥—
इति यद्भगवान् व्यासो निजगाद प्रियं वचः ।
अनिच्छयाऽपि भवतामद्य तत्सत्यमीक्ष्यते ॥३६०॥
मन्दिराणां प्रतिष्ठा वो धनगौरवगर्विता ।
विनष्टा, निर्गतस्तेभ्यो यतो भावप्रियो हरिः ॥३६१॥

हरिस्मरणनिर्धूतरजसामन्तरात्मसु ।
अद्यैषां मूर्तिमध्यस्थो भवतामीश्वरः स्थितः ॥३६२॥
स एव भगवानेतान् भवत्सेवासु योजयन् ।
गृहग्रामप्रतोलीनां शुद्धये कुरुते क्षमान् ॥३६३॥
अद्य सङ्कुलितावासे जनसम्मर्ददूषिते ।
नैतेऽभविष्यँश्चेल्लग्नाः सेवायां नः प्रमादिनाम् ॥३६४॥
या दशाऽप्यभविष्यन्नो न सा स्पृशति कल्पनाम् ।
तस्मान्न बन्धवो, दीनानमून्निन्दथ सेवकान् ॥३६५॥

( देवमन्दिरप्रतिष्ठाप्रयोजनम् )

एतादृशानामल्पज्ञजनानां सङ्ग्रहाय वै ।
भवतां मन्दिराण्यासन् स्थापितानि पुरर्षिभिः ॥३६६॥
नैतेषामुपयोगाय सन्ति चेन्मन्दिराणि वः ।
निर्गत्य तेभ्यस्तन्नाथो गृहे तेषां निवत्स्यति ॥३६७॥
द्वारकातो विनिर्गत्य द्वारकाधिपतिः स्वयम् ।
डङ्कापुरेऽन्त्यजातानां कल्याणायाऽऽगमत्पुरा ॥३६८॥
श्रीनाथो बालकृष्णोऽपि भवतां मन्दिरात्तथा ।
विनिर्गत्य कुतो नैषां मन्दिरेषु वसेत्ततः ॥३६९॥
तस्मान्न द्रोहमुत्पाद्य तिरस्कुर्वन्तु साधवः ।
एतान् हरिजनान् युष्मदङ्गीभूतान् विशेषतः ॥३७०॥

इत्यष्टमः परिच्छेदः ॥

॥ पञ्चभूतेश्वरोपासनाप्रकारनिरूपणं नाम नवमः परिच्छेदः ॥

एते तमीश्वरं पञ्चभूतरूपं प्रतिष्ठितम् ।
उपस्कृत्य गृहाऽऽराममार्गान्नित्यमुपासते ॥३७१॥
परेऽपि पञ्चभूतानां विविधोपासनक्रमैः ।
उपासते तमीशानं यो जडैर्जड उच्यते ॥३७२॥
येऽपि विज्ञानवेत्तारः सम्पन्नाः सूक्ष्मसाधनैः ।
तेऽपि तं परमेशानमणुरूपमुपासते ॥३७३॥
ये यथा येन भावेन भावयन्ति तमीश्वरम् ।
ते तथा फलमासाद्य यापयन्तीह जीवितम् ॥३७४॥
पाश्चात्यैरर्थकामानामीप्सया सोऽर्चितः प्रभुः ।
तस्मात्तैरर्थकामैस्ते सम्पन्नाः सन्ति भूतले ॥३७५॥

( आद्यानामृषीणामीश्वरोपासनप्रकारः )

अस्माकं वैदिकाऽऽचार्या ऋषयः परमर्षयः ।
सर्वत्रैकरसां व्याप्तां चेतनां पर्युपासत ॥३७६॥
सच्चिदानन्दरूपां तां त्रिगुणां भूतिमीशितुः ।
समीक्ष्य सर्वतः प्रोतां परमानन्दमभ्यगुः ॥३७७॥
आत्मानमेव सर्वत्र विततं पश्यतां सताम् ।
नाऽभूदसूयकः कोऽपि तेषां विद्वेषणस्तथा ॥३७८॥
सर्वत्र बन्धुभावेन भ्रातृभावेन वर्तनात् ।
वर्तनाच्चाऽऽत्मभावेन लेभिरे विश्वबन्धुताम् ॥३७९॥

अयोध्याधिपती रामः प्रजानां वल्लभोऽभवत्
जनकानामभूदेष जामाता चातिसम्मतः ॥३८०॥
तथापि चकमे नैष किञ्चित्साहाय्यमन्यतः ।
सीतया लक्ष्मणेनैव केवलो निरगाद्वनम् ॥३८१॥
तत्राऽऽत्मबन्धुभावेन वर्तनादभवत् प्रियः ।
वानराणां च ऋक्षाणां पक्षिणां च विशेषतः ॥३८२॥

( चार्वाकाणामीश्वरोपासनाप्रकारः )

चार्वाकाश्चेतनाशक्तिं मत्वैतां मदशक्तिवत् ।
चतुर्भूतसमष्टिं तां यावज्जीवमुपासत ॥३८३॥
अतो हि रावणादीनामभवन् वशवर्तिनः ।
भूमिवार्यनलप्राणाः सानुकूलाः समन्ततः ॥३८४॥
पपात काले पर्जन्यः काले सूर्यस्तताप च ।
अनुकूलास्तथैतेषां वह्नयश्च प्रजज्वलुः ॥३८५॥
अतिवृष्टेरनावृष्टेरभवन्न भयं क्वचित् ।
भूतोपासनमाहात्म्याद् वैषम्यं नाऽभवत् क्वचित् ॥३८६॥

( बौद्धानामीश्वरोपासनाप्रकारः )

यतस्तु शून्यभावेन दुःखभावेन चेशितुः ।
उपासितमभूदेतद् भूतरूपं कलेवरम् ॥३८७॥
ततःप्रभृति शून्या धीरस्माकमुदपद्यत ।
दुःखरूपमिदं सर्वं जगच्छून्यमभासत ॥३८८॥

( आर्हतानामीश्वरोपासनाप्रकारः )

शून्यस्थाने पुनर्जीवान् कल्पयित्वा विचक्षणैः ।
अस्माभिरेव भूतेषु निर्जीवत्वं निवेशितम् ॥३८९॥

निर्जीवत्वमजीवत्वं जडत्वं ज्ञानशून्यताम् ।
आरोप्य पुद्गलत्वं च भूतात्मोपेक्षितः प्रभुः ॥३९०॥

विघातिनी ततोऽस्मासु जडजीवभिदोत्थिता ।
परस्परं विरोधश्च जातो जीवप्रभेदतः ॥३९१॥

जडभावनयैतस्मिन् ईक्षिते तु परात्मनि ।
वयं जडत्वमापन्नाः परैरेव प्रधर्षिताः ॥३९२॥

( जगद्गुरोः शङ्करस्येश्वरोपासनाप्रकारः )

"घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च ।
तद्वद् ब्रह्म जगत्सर्वमिति वेदान्तडिण्डिमः" ॥

इत्युक्त्वा भगवानाद्यः शङ्करः स जगद्गुरुः ।
जडजीवभिदाध्वंसे यत्नानकृत भूरिशः ॥३९३॥

"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" ।
इत्यदोवचनेनापि जीवानन्त्यं जहार सः ॥३९४॥

कस्तथापि तदुक्तेषु श्रद्दधानो विचक्षणः ।
आत्मभावेन सकलं पश्यन्नानन्दमश्नुते ॥३९५॥

( ततः परेषामीश्वरोपासनाप्रकारः )

जगद्गुरोः परैरन्यैः पुनर्वादाः प्रकल्पिताः ।
ब्रह्मणः पृथगस्तित्वं स्थापितं जडजीवयोः ॥३९६॥

स्थापितार्थप्रचाराय पुनर्यत्नाः प्रचारिताः ।
पुनर्वेयं जडत्वेन भूतेश्वरमुपास्महि ॥३९७॥

( इति नवमः परिच्छेदः )

## ईश्वरस्य जगत्कर्तृत्वे नानाविधतर्कवितर्कनिरूपणं नाम दशमः परिच्छेदः ॥

"अस्तीश्वरः परः कोऽपि कर्ता ब्रह्माण्डनायकः ।
घटानामिव लोकानां कुम्भकार इवोद्यतः ॥३९८॥

कथं जडानां भूतानां ज्ञानेच्छाकृतयो गुणाः ।
सम्भवेयुर्घटस्येव, कर्तृमात्रगता हि ते ॥३९९॥

अतः क्षित्यादिभूतानां जडानामपरो महान् ।
अस्ति कर्तेश्वरो नाम यः पृथक् सर्वतःस्थितः" ॥४००॥

इत्याद्यैर्विविधैस्तर्कैः क्षित्यादौ भूतपञ्चके ।
जडभावं समारोप्य दविष्ठोऽक्रियतेश्वरः ॥४०१॥

वस्तुतः पञ्चभूतात्मब्रह्मणि स्थूलविग्रहे ।
जडत्वानीश्वरत्वादिदोषारोपो न सार्थकः ॥४०२॥

"कर्तारमन्तरा किञ्चित् कार्यं नैव प्रजायते" ।
इत्येव तु महानस्ति भवतां प्रथमो ग्रहः ॥४०३॥

आग्रहो वा ग्रहो वाऽयमेष किंवा दुराग्रहः ।
भवतां न स्थिरः, स्थेयान् कुतः स्थेष्ठो भवेत्पुनः ॥४०४॥
कर्त्तारमन्तरा किञ्चिद् यदि कार्यं न जायते ।
कार्यरूपस्य तत्कर्तुः कः कर्त्ता त्वीश्वरस्य वः ॥४०५॥
अनवस्थाभियो भीता यदि कर्तुर्न कार्यताम् ।
अङ्गीकुर्युर्भवन्तश्चेद् गुणस्तेनापि नो महान् ॥४०६॥
पौरुषेयपदार्थानां कर्तारः सन्ति पूरुषाः ।
अतस्तेषामकार्यत्वमीश्वरत्वं च सेत्स्यति ॥४०७॥
क्षित्यादिषु च भूतेषु कर्तृत्वात् कार्यसन्ततेः ।
न कार्यत्वमनीशत्वमारोपयितुमीश्यते ॥४०८॥
व्यापारवान् स्वतन्त्रो यः स चेत्कर्ता भवन्मतः ॥
तादृशस्त्वयमेवास्ति भूतात्मा त्रिगुणः प्रभुः ॥४०९॥
भूतात्मा परमेशानस्त्रिगुणः प्राक् प्रकीर्तितः ।
व्यापाराः शक्तयः सर्वाः स्वातन्त्र्यात्तमधिष्ठिताः ॥४१०॥
अन्योन्याश्रयणादेषां यद्यस्वातन्त्र्यमीहितम् ।
तदा तु भवतामीशोऽप्यस्वतन्त्रः स्वयं भवेत् ॥४११॥
पृथक् स्याद् भवतामीशो यद्यस्मात् त्रिगुणात्मनः ।
सोऽपि देशं निजं कालमुपादानमथाऽऽश्रयेत् ॥४१२॥
देशकालाश्रयो यस्तु यश्चोपादानबन्धनः ॥
स कथं स्यात् स्वतन्त्रो वः पृथग् भूतात्मनेश्वरः ॥४१३॥

यद्युपादानराहित्यं देशकालाद्यनाश्रितिः ।
कल्प्येत, तर्हि सत्तायामस्ति किं वः प्रमापकम् ॥४१४॥
यदि शून्यमथाऽऽकाशोऽवकाशो देशशब्दितः ।
स ह्युपादानराहित्यात्स्वतन्त्रश्चेश्वरोऽस्ति वः ॥४१५॥
तत्राऽस्माकं विरोधोऽपि नैव कश्चित्प्रवर्तते ।
प्रागेवेश्वररूपत्वस्वीकारादस्य चाऽसतः ॥४१६॥
असतस्तस्य शून्यस्य केवलस्य तथागतैः ।
किन्तु यद्वदुपास्यत्वमुपदिष्टं पुरातनैः ॥४१७॥
भवद्भिरपि शून्यस्य तस्यैवोपासना तथा ।
निरूप्यते यतस्तस्माद् बौद्धैरेव प्रभूयते ॥४१८॥
वयन्तु भगवद्रूपं द्विविधं पर्युपास्महे ।
अधिष्ठानमथाधारमधिष्ठितमथाहितम् ॥४१९॥
किन्त्वधिष्ठानरूपस्य केवलस्य तु नेशताम् ।
अङ्गीकुर्मो यतस्त्वेष रूपद्वयभृदुच्यते ॥४२०॥
किञ्चाधिष्ठानरूपोऽसौ शून्यात्मा केवलः प्रभुः ।
कार्याणां कारणं नैव भवितुं चापि युज्यते ॥४२१॥
कार्याद्धि पूर्वभावित्वं कारणस्योच्यते क्रमात् ।
कारणात्परतो भावि कार्यं चाख्यायते बुधैः ॥४२२॥
नित्येभ्यः परमाणुभ्यः प्राक्तनो नेश्वरो मतः ।
तथात्वे तु विहन्येत तेषां सा नित्यता मता ॥४२३॥

न चेश्वराज्जगद्धेतुभूताद्धि परमाणवः
जन्यन्त इति मन्यन्ते केऽपि वो न्यायवेदिनः ॥४२४॥
कुम्भकार इवैव स्याद् भवतामीश्वरो यदि ।
तदा जगदुपादानमन्यदीशाद्धि कल्प्यताम् ॥४२५॥
मृदुपादानमासाद्य कारणं कुम्भकारकः ।
निमित्तकारणीभूतः कार्यं कुम्भं करोति हि ॥४२६॥
तथेश्वरो निमित्तं सन् किमुपादानकं जगत् ।
करोतीति, बटो ब्रूहि, यतोऽन्यः साध्यते प्रभुः ॥४२७॥
भवतामीश्वरः शून्य आकाश इव सन्नपि ।
कार्याणामन्यथासिद्धः किं तृतीयो न जायते ॥४२८॥
पितुः पितृणामुत्पत्तौ कारणं सन्नसौ प्रभुः ।
पुत्राणां चापि पौत्राणामुत्पत्तौ कारणं भवेत् ॥४२९॥
कुलाल जनकस्तस्मादन्यथासिद्धतां यथा ।
तथा न किं भवत्कर्ताऽप्यन्यथासिद्धिमाप्नुयात् ॥४३०॥

( भूतानां कार्यत्वस्य खण्डनम् )

किञ्च भूतात्मनीशेऽस्मिन् अस्माकं परमेऽव्यये ।
कथं कार्यत्वमारोप्य तत्कर्तृत्वं गवेष्यते ॥४३१॥
घटेषु कर्तृजन्यत्वं दृष्ट्वा कार्यत्वमाहितम् ।
पञ्चभूतात्मनीशे तु दृष्टा किं कर्तृजन्यता ॥४३२॥

(कर्तुः कृतिं किमालोक्य भूते कार्यत्वमाहितम् ।
आहोस्विद् भूतमालोक्य कृता किं कर्तृकल्पना ॥४३३॥
भूतात्मनः परेशात्तु प्राक्तनं कमपीश्वरम ।
न दर्शयितुमीशाःस्थ यः कुर्वन् स्याज्जगत्त्रयम् ॥४३४॥
न च भूतात्मनीशेऽस्मिन् कार्यत्वारोपणं क्षमम ।
यत्किञ्चित्कृतिजन्यत्वसाधने त्वक्षमा यतः ॥४३५॥
यावत् क्षित्यादिभूतानां कार्यत्वं नहि सिध्यति ।
न तावत्तैरदोभूतैः क्रियतां कर्तृकल्पना ) ॥४३६॥
किन्तु केनापि युक्तेन पञ्चभूतात्मकं जगत् ।
जन्यमानं निजाक्षिभ्यां कदाचिदपि चेक्षितम् ॥४३७॥
केनेयं पृथिवी देवी परमाणुस्वरूपिणी ।
नित्यापि जन्यमानेह लोचनाभ्यां निरीक्षिता ॥४३८॥
जन्यमानाविमौ देवौ सूर्याचन्द्रमसौ पुरा ।
सता समीक्षितौ सत्यौ केन वा सत्यवादिना ॥४३९॥
जन्यमानो महाँस्तापो जन्यमानो महानिलः ।
जन्यमानाः समुद्राश्च सरितः केन लक्षिताः ॥४४०॥
परमाणुस्वरूपा हि नित्याः सर्वस्य सम्मताः ।
भूमिवार्यनलप्राणाः पुञ्जीभूताश्च ते स्वयम् ॥४४१॥
अलक्षित्वाऽपि चैतेषां कल्पितोत्पादनक्रमम् ।
अहो भवद्भिः कार्यत्वमेषां स्थापितमाग्रहात् ॥४४२॥

( निष्कर्षः )

तस्मान्न कार्यतामस्य पञ्चभूतात्मनः प्रभोः ।
स्वीकुर्मः किन्तु कर्तृत्वं तस्य मन्यामहे विभोः ॥४४३॥
स एव कर्ता लोकानां स चोपादानमव्ययम् ।
सद्भावाऽव्यक्ततत्त्वाख्यः स्तोतव्यः स हि वस्तुतः ॥४४४॥
दृश्यतामार्यजातीया वयमेतं महेश्वरम् ।
कथमद्यापि सद्भावाद् भूतरूपमुपास्महे ॥४४५॥

( पृथ्वीपूजा )

अनन्तकोटिब्रह्माण्डव्यापिनीं मातरं महीम् ।
नैकदेशस्थितो जीवः प्रभवेत् समुपासितुम् ॥४४६।
अतस्तदंशमेवैकं मूर्तमादाय साधवः ।
शिवशक्त्याद्यभिख्याभिः सुखमाराधयन्ति ताम् ॥४४७॥
एतस्या अंशभूतेषु धातुमृत्काष्ठकाऽश्मसु ।
विष्णुरुद्राम्बिकादीनां प्रतिमां पूजयामहे ॥४४८॥
शालिग्रामशिलायां वा बाणे वा नर्मदेश्वरे ।
शिवविष्ण्वादिसंज्ञाभिर्महीं देवीमुपास्महे ॥४४९॥
आर्यसंस्कारसम्पन्ना भारतीयाः समे वयम् ।
प्रातरुत्थाय तामेतां नमामो मातरं महीम् ॥४५०॥
श्रौतं स्मार्तं च पौराणं न तथा कर्म किञ्चन ।
यत्र न स्यादियं देवी वन्दिता प्रथमार्चिता ॥४५१॥

( जलपूजा )

तथैष वरुणो देवः प्रतिकर्मणि पूज्यते ।
अप्सोमजलसंज्ञाभिः स हि वेदेषु गीयते ॥४५२॥

गङ्गां कलिन्दतनयां देवीं मेकलकन्यकाम् ।
सरस्वतीं महीं साभ्रां तपन्तीं सागरप्रियाम् ॥४५३॥

क्षिप्रां गोदावरीं कृष्णां काबेरीं कलनादिनीम् ।
अङ्गबङ्गकलिङ्गादि--देशपावनकारिणीः ॥४५४॥

अन्याः पञ्चाम्बुमध्यस्थाः देवीः स्रोतस्विनीः शिवाः ।
ब्रह्मद्रवस्वरूपेण सुखमद्याप्युपास्महे ॥४५५॥

( अग्निपूजा )

अग्नेस्तु महिमानं किं वर्णयामाऽल्पमेधसः ।
यश्चतुर्ष्वपिवर्णेषु पूज्यते चाश्रमेषु च ॥४५६॥

न तन्त्रं न तपः किञ्चिन्न जपो नार्चनं तथा ।
न यज्ञो नाध्वरः सत्रो न वा तादृगुपक्रमः ॥४५७॥

कोऽपीह दृश्यते लोके यत्र न स्यादयं प्रभुः ।
पावकः पञ्चभूतात्मा प्राधान्येनाभिपूजितः ॥४५८॥

योऽस्माभिरनिशं देवो गायत्र्या गीयते प्रभुः ।
सविता सोऽपि लोकानां सर्वदोपास्यते मुदा ॥४५९॥

( वायुपूजा )

प्राणायामैः परात्मानं सर्वान्तश्चारिणं प्रभुम् ।
योगमार्गमुपाश्रित्य वायुमार्या उपासते ॥४६०॥

इति दशमः परिच्छेदः

अथ पुनः समन्वयोपसंहारौ नामैकादशः परिच्छेदः ॥

( सद्रूपेश्वरस्वरूपम् )

इत्थं यदिह भूतानां पञ्चकं नित्यमव्ययम् ।
तदेव भगवद्रूपं प्रथमं नात्र संशयः ॥४६१॥
भूतोपासनमुत्सृज्य यस्त्वन्यं जगतः परम् ।
अन्विष्यति परेशानमन्विष्यति स खे सुमम् ॥४६२॥
उपासनायाः पन्थानो बहवः सन्ति निर्मलाः ।
अनुकूलं हितं वीक्ष्य तं तं पन्थानमाश्रयेत् ॥४६३॥
देशकालस्थितिं वीक्ष्य विदुषा हितकारिणा ।
उपास्यो भगवान् भूतरूपो देवो महेश्वरः ॥४६४॥
सच्चित्संज्ञाद्वयेनैष स्तूयते परमेश्वरः ।
वेदान्ते, तच्च सद्रूपं नियतं भूतपञ्चके ॥४६५॥
भूतपञ्चकपूजातः सद्ब्रह्मैव प्रपूज्यते ।
न सद्ब्रह्मणि भूते वा भेदः कश्चन विद्यते ॥४६६॥
सद्ब्रह्मणः प्रभूताद्धि चिद्रूपं ब्रह्म जायते ।
अन्तर्भावः समग्राणां प्राणिनां यत्र विद्यते ॥४६७॥

( सद्रूपस्यास्य नित्यत्वाच्चिद्रूपं नित्यमव्ययम ।
अतःकदाचिन्नैवास्य प्रलयो जगतो मतः ) ॥४६८॥

( चिद्रूपेश्वरस्वरूपम् )

य एष चेतनावर्गो ब्रह्मणस्तदथोत्तरम् ।
द्वितीयं परमं रूपं यदुपास्यं सदा बुधैः ॥४६९॥

मातरः पितरश्चान्ये वयसा तैः समाश्च ये ।
आचार्या गुरवः सर्वे तत्रेश्वरपदे स्थिताः ॥४७०॥

यश्च मान्यः समस्तानां जनानां जायते नृपः ।
सोऽपीश्वरपदं लोके भजते तेन वर्त्मना ॥४७१॥

रामकृष्णादयस्तस्मादस्माकं प्रभवो मताः ।
विमताः कंसचैद्याद्यास्तिरस्कारं ततो गताः ॥४७२॥

व्यासवाल्मीकिकपिलपतञ्जलिमुखास्ततः ।
स्पष्टमीशपदं प्राप्ता जनताऽऽराधिता यतः ॥४७३॥

तस्माद् यो यो जनः साक्षाज्जनताऽऽराधने रतः ।
स सर्वोऽपीश्वरांशोऽस्ति वन्दनीयो मुहुर्मुहुः ॥४७४॥

" यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवाऽवगच्छ त्वं मम तेजोंऽशसम्भवम् " ॥

इत्यदोवचनेनापि गीतायां भगवान् स्वयम् ।
जातं तमीश्वरं मेने जनताऽऽराधकस्तु यः ॥४७५॥

तस्माद् येऽप्यस्य देशस्य सेवकाः सन्ति नायकाः ।
ते सर्वेऽपीश्वरस्यांशास्तत्र नैवास्ति संशयः ॥४७६॥

तदेषां वाक्यकरणात्सम्मानाद्गुणवर्णनात् ।
उपासनीयो नियतं परमात्मा स चिन्मयः ॥४७७॥
आगता येऽप्यतिथयः परे वा शरणार्थिनः ।
प्राणिनस्तेऽपि नियतमीश्वरस्य कला मताः ॥४७८॥
अर्भकाः शिशवो बालाः शिष्याः सर्वेऽन्तिकेचराः ।
तत्समानं वयः प्राप्ता इतरे चापि बालकाः ॥४७९॥
तेऽपीश्वरधिया पूज्याश्चिद्रूपास्ते हि निर्मलाः ।
तेषामुपासनामार्गः पुनरग्रे प्रवक्ष्यते ॥४८०॥
भृत्यवर्गः प्राणिवर्गो यावानत्रास्ति भूतले ।
स सर्वोऽपीश्वरस्यांशो मन्तव्यः श्रेयसोऽर्थिना ॥४८१॥
लतागुल्मादयस्तद्वत् अन्नौषधिरसास्तथा ।
सर्वमेतद्विभो रूपं नास्ति तद् यन्नचेश्वरम् ॥४८२॥
सर्वेषामपि रूपाणां देशकालार्थयोगतः ।
उपासनाप्रकारास्तु सन्ति सिद्धाः पृथक् पृथक् ॥४८३॥
उत्तरार्धे तदीशस्य भिन्नानाराधनक्रमान् ।
विवक्षुरहमत्रैव विरमाम्यल्पचेतनः ॥४८४॥
प्रीयतां तेनभूतात्मा चिदात्मापरमोऽव्ययः ।
स्थितो यस्त्रिविधो लोके देशकार्थभेदतः ॥४८५॥

ॐ नमः शिवाय

॥ तत्सद्ब्रह्मार्पणमस्तु ॥

श्रीः ॥

ॐ नमः शिवाय

( अथ न्यायमतचिन्तनं नाम द्वादशः परिच्छेदः )

## नैयायिकानामसम्मतः पुनर्जन्मवादः

तथा हि—

अत्र तार्किकरत्नानां कियतां मतमुत्तमम् ।
जीवजन्मादिविषये यद्युपन्यस्यते मुदा ॥४८६॥
न तदस्थानिकं नापि भवेदौचित्यवर्जितम् ।
यतः सिद्धान्तवैशद्यमतो जायेत धीमताम् ॥४८७॥
पुनर्जन्मप्रसिद्ध्यर्थं जीवाऽनेकत्वमिष्यते ।
नित्यत्वमपि जीवानाम्—असंख्यानां समीह्यते ॥४८८॥
यावच्छरीरभेदेन जीवानन्त्यं न सिध्यति ।
न तावज्जीवभावानां पुनर्जन्मापि सिद्ध्यति ॥४८९॥
तस्मात्प्राग् जीवभावोऽयं पृथगस्ति न वास्ति वा ।
तदेतच्चिन्त्यते पश्चाज् ज्ञास्यते तत्पुनर्भवः ॥४९०॥
नैयायिकास्तर्कपराः प्रायशस्तत्त्वचिन्तकाः ।
जीवमीश्वरमित्येवमात्मानं द्विविधं जगुः ॥४९१॥
जीवश्चतुर्दशगुणः प्रोक्तश्चाष्टगुणः प्रभुः ।
नैतयोरैक्यमेतेषां नये सिध्येत् कथञ्चन ॥४९२॥

सुखं दुःखमथ द्वेषो धर्माऽधर्मौ च भावना ।
नैवेश्वरे गुणाः सन्ति जीवे त्वेते व्यवस्थिताः ॥४९३॥

शरीरभेदाज्जीवानामनेकत्वमनन्तता ।
नित्यता चापि मन्तव्या पुनर्जन्मप्रसिद्धये ॥४९४॥

ईश्वरस्तु ततो जीव–तत्त्वान्नित्यं पृथक् स्थितः ।
न तत्राऽनेकताबुद्धिर्देहभेदात्प्रकल्प्यते ॥४९५॥

( जीवानां मूर्तत्वापत्तिः )

शरीरभेदाज्जीवानां भेदसिद्धौ शरीरवत् ।
निकृष्टपरिमाणत्वमेषां मन्तव्यमेव तैः ॥४९६॥

ततो या विभुता प्रोक्ता क्वचित्तैरात्मनःपुरा ।
सेश्वरस्याधिगन्तव्या भवेज्जीवात्मनस्तु न ॥४९७॥

जीवात्मनामनेकत्वान्निकृष्टपरिमाणतः ।
मूर्तत्वमेव वक्तव्यं, न विभुत्वं कथञ्चन ॥४९८॥

अपकर्षानाश्रयो यः परिमाणः प्रकीर्तितः ।
स यत्र, स विभुर्वाच्यः स एव परमो महान् ॥४९९॥

जीवानां तु स नैवास्ति परिमाणो महानतः ।
यथा जलं क्षितेर्भिन्नं तद्वज्जीवः परेशितुः ॥५००॥

ततः क्षितिर्जलं यद्वत्तेजो वायुर्मनो यथा ॥
परापरत्वमूर्तत्वक्रियावेगाश्रया मताः ॥५०१॥

जीवात्मानस्तथैवैते परताऽपरताऽश्रयाः ।
कुतः क्रियाश्रयास्तद्वन्न स्युर्मूर्ताश्च वेगिनः ॥५०२॥
सन्ति चेत् किमु नैवोक्ता मूर्तास्ते न्यायदर्शने ।
धर्माधर्माश्रयाँस्ताँश्च कस्मात् प्रोचुर्विभून् मुधा ॥५०३॥

( शिवजीवयोर्भेदे द्रव्यदशकत्वापत्तिः )

अहो महदिदं चित्रं यदित्थं शिवजीवयोः ।
स्वतः सिद्धेऽपि भेदेऽस्मिन् द्रव्यभेदो न गण्यते ॥५०४॥
'क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः' ।
इत्युक्त्वा द्रव्यनवकमङ्गीकुर्वन्त्यमी बुधाः ॥५०५॥
भेदे तु खलु निर्णीते जीवात्मपरमात्मनोः ।
द्रव्याणां दशकं प्राज्ञैः प्रतिज्ञातव्यमच्छलैः ॥५०६॥
लक्षिता पृथिवी यद्वदापस्तेजः पृथक् तथा ।
जीवात्मा परमात्मा च लक्षणीयौ पृथक् पृथक् ॥५०७॥
न चर्षिभिर्न चाऽऽचार्यैः पृथगेते हि लक्षिताः ।
एकेनैवाऽऽत्मशब्देन गृहीता उभयेऽपि ते ॥५०८॥

( जीवात्मपरमात्मनोर्वास्तविको भेदाभावः )

तेनैव ज्ञायते नूनं यन्न भेदोऽस्ति कश्चन ।
द्विधा प्रतीतयोःश्रीमञ् जीवात्मपरमात्मनोः ॥५०९॥
नाऽभिप्रेतोऽप्यभूद् भेदो महर्षीणामथैनयोः ।
अन्यथा तेऽप्यमंस्यन्त द्रव्याणां दशकं क्रमात् ॥५१०॥

परमात्मैव लोकेऽस्मिँश्चेतनाऽऽख्यो विलक्षणः ।
देही जीवः शरीरी च भूत्वैवाऽनन्त्यमश्नुते ॥५११॥

देहोदयादतः पूर्वमव्यक्तः स विभुः परः ।
देही सन् व्यक्ततामेति सुखी दुःखी च मन्यते ॥५१२॥

देहक्षयात् परं चासौ पुनरव्यक्तिमश्नुते ।
जीवभावस्ततस्तस्मात् समूलं च विनश्यति ॥५१३॥

विनष्टे जीवभावे च न पुनर्जन्मभावना ।
कथमप्यस्तितामेति विध्वस्तः कलशो यथा ॥५१४॥

सादित्वादन्तराहित्याद् ध्वंसाभावस्य सर्वथा ।
न विनष्टं पुनः किञ्चिज्जायमानं प्रदृश्यते ॥५१५॥

( जीवभेदाङ्गीकारे परमात्मनो वैयर्थ्यापत्तिः ॥ )

तत्त्वभेदे गृहीते तु जीवात्मपरमात्मनोः ।
कोटिकल्पान्तकालेऽपि तयोरैक्यं न सम्भवेत् ॥५१६॥

अनैक्ये च पृथग्भावे सम्मते तु तयोस्ततः ।
अपवर्गोऽपि जीवस्य मन्तव्यो जिनसम्मतः ॥५१७॥

सदसत्कर्मजनितसंस्कारक्षयबन्धनः ।
यथाऽपवर्गो जीवानां तथा स्याद् भवतामपि ॥५१८॥

संस्कारक्षयजन्ये च मोक्षे जीवात्मनां मते ।
किं पुनः परमेशस्य स्वीकारे फलमस्ति वः ॥५१९॥

माभूद् भवन्मतः श्रीमन् ! परमात्मा परोऽव्ययः ।
यदा सन्ति स्वतन्त्रास्ते जीवात्मानो ह्यनश्वराः ॥५२०॥

सत्कर्मजन्यैः संस्कारैः सद्योनिषु चरन्तु ते ।
दुष्कर्मजन्यैः संस्कारैर्दुर्योनिषु चरन्तु ते ॥५२१॥

सदसत्कर्मणां त्यागादुपवासकृशोदराः ।
संस्कारवासनाहीनास्ते मुक्ताः सन्तु देहिनः ॥५२२॥

किं प्रयोजनमित्थं च व्यापकेन परात्मना ।
जीवात्मानः स्वतन्त्रा हि यदा मोक्षार्थसाधने ॥५२३॥

भक्तितुष्टः परो ह्यात्मा करुणावरुणालयः ।
यदि स्यात् केवलो मोक्ष–दानादाने स्वयं प्रभुः ॥५२४॥

कस्मैचिन्मोक्षदानेन कस्मैचित् कष्टदानतः ।
वैषम्यनिर्घृणः स स्यात् प्रमत्तो भूपतिर्यथा ॥५२५॥

तथात्वे च ततस्तस्मिन् नानाऽऽवेशादिसम्भवात् ।
प्राप्नुयाज्जीवरूपत्वं नाऽनघां परमात्मताम् ॥५२६॥

निर्धने च समृद्धे च मनुष्यत्वं यथा समम् ।
यथा समं मनुष्यत्वं विरक्ते सुरतेऽपि च ॥५२७॥

तद्वन्नियामकेऽप्यस्मिञ् जीवानां परमात्मनि ।
जीवत्वमेव सामान्यं तिष्ठेन्नैव परात्मता ॥५२८॥

नियन्तृत्वविशेषेण जीवस्यैव परात्मता ।
यदा मता तदाऽप्यस्माज्जीवत्वं नापहीयते ॥५२९॥

नियन्तृत्वगुणेनैव जीवाः प्राप्य परात्मताम् ।
परेशाः परमात्मानः प्रोच्येरँल्लोकसम्मताः ॥५३०॥

ततश्चार्वाकसिद्धान्तान्न भेदो भवतां भवेत् ।
लोकसिद्धो यतो राजा परेशः स्याद्भवन्मते ॥५३१॥

( जीवसंस्कारयोः सम्बन्धे विचिकित्सा )

किञ्च जीवा ह्यनन्ताः स्युर्नित्याः संस्कारयोगिनः ।
तदाऽपि तत्र साऽऽशङ्का न मतिर्निर्मलायते ॥५३२॥

संस्काराणां च जीवानां सम्बन्धः किन्नु शाश्वतः ।
अशाश्वतो वा सम्बन्धस्तत् प्राग् धीरैर्निरूप्यताम् ॥५३३॥

शाश्वते त्वत्र सम्बन्धे क्षणिकत्वं न सम्भवेत् ।
क्षणिकत्वं भवद्भिश्च प्रागेवाऽस्ति प्रतिश्रुतम् ॥५३४॥

आकाशस्येव जीवानां साधर्म्ये तु विवक्षिते ।
अव्याप्यवृत्तिः क्षणिको जीवानां गुण ईरितः ॥५३५॥

भावनाख्यश्च संस्कारो जीवानां यो गुणो मतः ।
स निश्चयधिया जन्यो नश्यश्चोपेक्षणाधियः ॥५३६॥

यस्तु जन्यो विनश्यश्च स कथं शाश्वतो भवेत् ।
अशाश्वतस्य सम्बन्धः शाश्वतश्च कुतो भवेत् ॥५३७॥

तस्मान्नैवास्ति सम्बन्धो जीवसंस्कारयोः क्वचित् ।
नित्यश्च शाश्वतश्चापि नैयायिकनये स्थितः ॥५३८॥

( जीवगुणानामनित्यत्वम ॥ )

संस्काराणामनित्यत्वान्नित्यत्वाच्चैव देहिनः ।
संस्कारजननात्पूर्वं जीवसत्त्वैव सम्मता ॥५३९॥
भावनावासनाशब्दौ संस्कारस्यैव वाचकौ ।
तस्मादनित्या मन्तव्या भावना वासनापि च ॥५४०॥
वासनाया अनित्यत्वात्तस्याः प्राप्तोदयावपि ।
धर्माधर्माभिधौ स्यातामनित्यौ भावजौ गुणौ ॥५४१॥
धर्माधर्माभिधानाभ्यां गुणाभ्यां लब्धजीवनौ ।
सुखदुःखाभिधानौ च गुणौ स्यातामशाश्वतौ ॥५४२॥
तद्वद् द्वेषोऽप्यनित्यः स्याद् गुणो जीवात्मनो यदा ।
कथं तदाऽसौ नित्येऽस्मिन् नित्यःसन्स्थातुमर्हति ॥५४३॥
सति नित्ये ततो जीवे नैवादौ काऽपि भावना ।
न वासना न संस्कारः शुद्धे सच्चिन्मये मतः ॥५४४॥

( जीवानां संसरणे हेतोरनुपलम्भः ॥ )

तादृशेन पुनर्योगः संस्काराणां कथं भवेत् ।
भावना–वासनाशून्यः स कथं संसरेत् पुनः ॥५४५॥
भवन्मते तु जीवात्मा संस्कारवशतां गतः ।
संसरेन्नाऽन्यथा कोऽपि हेतुः संसरणे दृढः ॥५४६॥

जीवात्मनस्तु नित्यत्वादनित्यत्वाच्च संस्कृतेः ।
नहि संस्कारवशतां जीवो गच्छेत् कथञ्चन ॥५४७॥
कथमादौ ततो जीवा भावनारहिता इमे ।
संसृताः, संसरन्तीह, संसरिष्यन्ति च क्षितौ ॥५४८॥

( भावनाया बुद्ध्यतिरिक्तत्वस्य खण्डनम् ॥ )

किञ्च भो भावना नाम यः संस्कारो भवन्मतः ।
स जीवानां गुणः प्रोक्तो विशिष्टो बुद्धितः पृथक् ॥५४९॥
अत्र जिज्ञास्यते बुद्धेर्भिद्यते भावना कथम् ।
भावनायां च बुद्धौ च प्रोच्यतां किं तदन्तरम् ॥५५०॥
अपेक्षा च तथोपेक्षा संशयो निश्चयस्तथा ।
स्मृतिर्विस्मरणं चापि प्रत्यभिज्ञानमेव च ॥५५१॥
एताः सर्वाः स्मृता बुद्धेर्वृत्तयः क्षणिका यतः ।
अतो न बुद्ध्यभिख्यानाद् गुणादेताः पृथङ्मताः ५५२॥
भावनाऽपि तथैवैका वृत्तिः स्यान्निश्चयात्मिका ।
या न बुद्धिगुणाद् भिन्नगुणरूपेण वर्तताम् ॥५५३॥
अहो कथं पुनरिमां भावनां बुद्धिवृत्तितः ।
पृथक्कुर्वन्ति धीमन्तो नैयायिकमहोदयाः ॥५५४॥

( उपेक्षाबुद्धेर्भावनाविघातकत्वम् ॥ )

किञ्च भो भगवान् व्यासो बोधयन् मृत्युलक्षणम् ।
अत्यन्तविस्मृतिं मृत्युं प्राह भागवतोत्तमः ॥५५५॥

सेयं विस्मृतिरत्यन्ता मुमूर्षोर्दृश्यते सदा ।
तस्याश्च विस्मृतेर्जन्म ह्युपेक्षातः प्रजायते ॥५५६॥
अपेक्षाबुद्धिराहित्यादुपेक्षा जायते ध्रुवम् ।
सा चोपेक्षा द्विधा दृष्टा मुमूर्षूणां च योगिनाम् ॥५५७॥
मुमूर्षूणामुपेक्षायां बुद्धि (शक्ति) ध्वंसो (भ्रंशो) हि कारणम् ।
योगिनां तु तदेतस्यां बुद्धिस्थैर्यं हि कारणम् ॥५५८॥
बुद्धिस्थैर्ये निजाऽऽनन्दवृत्तेरुद्गमकारणात् ।
अपेक्षावृत्तिराहित्यं न मनागपि तिष्ठति ॥५५९॥
निजाऽऽनन्दाऽन्यवस्तूनामपेक्षाविरहोदयात् ।
उपेक्षा योगिनामास्तां किन्तु नाऽऽत्यन्तिकी हि सा ॥५६०॥
तत्राऽऽत्मानुभवानन्दवृत्तेर्दृढतया स्थितेः ।
अपेक्षावृत्तिरस्त्येव यावद्देहस्य संस्थितिम् ॥५६१॥
मुमूर्षूणां मृतानां वा देहध्वंसे तु निश्चिते ।
न तत्र प्राणसञ्चारो न चोष्मा चेतनाभिधः ॥५६२॥
प्राणोष्मणामभावाच्च बुद्धिध्वंसः स्वतः स्थितः ।
बुद्धिध्वंसादपेक्षाऽपि स्वयमेव विनश्यति ॥५६३॥
अपेक्षायां विनष्टायामुपेक्षा जायते ध्रुवा ।
तया चोपेक्षया नित्यं जायतेऽत्यन्तविस्मृतिः ॥५६४॥

तामेव मृत्युमाह स्म भगवान् बादरायणः ।
तस्मिन् मृत्यौ ध्रुवे जाते भावनायाः स्थितिः कुतः ॥५६५॥
तामिमां भावनावृत्तिं क्षणिकामपि नश्वराम् ।
पुनर्जन्मप्रसिद्ध्यर्थं मुधा नित्यां ब्रुवन्ति भोः ॥५६६॥

( भावनाया नित्यत्वेऽपि योन्यन्तरप्रवेशाप्रसङ्गः ॥ )

भावनायास्तु नित्यत्वे जीवात्मनि सुनिश्चिते ।
न कोऽपि जीवस्तां वृत्तिं विस्मरेत् कल्पकोटिषु ॥५६७॥
नित्यत्वाद्भावनायाश्च भावनावशतां गतः ।
नियतामेव जीवात्मा काञ्चिद् योनिं भजेत् सदा ॥५६८॥
योनिष्वशीतिलक्षासु चतुर्लक्षाधिकासु च ।
न भ्रमेद्भवतां जीवो नित्यत्वाद् भावनाधियः ॥५६९॥
अनित्यत्वे त्वथैतस्याः कदा जन्म कदा लयः ।
नैतत्केनाऽपि शक्येत वक्तुं धात्राऽपि धीमता ॥५७०॥

( न्यायनयेनोपसंहारः ॥ )

सर्वानुभवसिद्धाऽपि क्षणावस्थायिनी ततः ।
भावना न पुनर्जन्मसाधनाय क्षमा भवेत् ॥५७१॥
अतो नैयायिकनये सुसूक्ष्मे वेदसम्मते ।
न पुनर्जन्मवादस्य स्थिरता काऽपि दृश्यते ॥५७२॥
तस्माज्जगति जीवानां सकृज्जन्मैव निश्चितम् ।
सकृन्मृत्युस्तथैतेषां नियतः पारमार्थिकः ॥५७३॥

पुत्रपौत्रादिरूपेण तिष्ठन्तोऽपि महीतले ।
न मृत्योः परतो भिन्ना नानायोनिष्वटन्ति ते ॥५७४॥
नरयोनौ समुत्पन्नो जीवात्मा भावनाबलात् ।
सुरो नरः पशुः पक्षी भवतीति मृषा वचः ॥५७५॥
पितॄणां भावनाः प्रायः पुत्रेष्वाविर्भवन्ति हि ।
पितरो हि प्रजायन्ते यतः पुत्रात्मना पुनः ॥५७६॥
एतादृक्तु पुनर्जन्म सम्मतं नः सनातनम् ।
न हि तत्प्रतिवादे नः प्रयत्नः कोऽपि वर्तते ॥५७७॥
अनन्तकोटिब्रह्माण्डेष्वनन्ताः सन्ति योनयः ।
तासु नित्या ह्यनन्ताश्च जातयः सन्ति सङ्गताः ॥५७८॥
नियतायामतो योनौ नियता जातिरस्ति भोः ।
सैव सञ्जनयत्यस्यां देहपिण्डं सचेतनम् ॥५७९॥
सञ्जाते देहपिण्डेऽस्मिन् स्वानुकूले सचेतने ।
सङ्क्रान्ता राजते सैव जातिर्देवी सनातनी ॥५८०॥
पुरातनं ततः पिण्डं मातापित्रादिसंज्ञितम ।
परित्यजति सा देवी पुत्रपौत्रादिपिण्डगा ॥५८१॥
तस्माज्जातेः परो नास्ति जीवात्मा कोऽपि तादृशः ।
प्राक्तनीं योनिमुज्झित्वा यो योन्यन्तरमाश्रयेत् ॥५८२॥

( इति द्वादशः परिच्छेदः )

## अथ साङ्ख्यनयेन पुनर्जन्मवादविचारो नाम त्रयोदशः परिच्छेदः ॥

( पुरुषस्य जन्मादेः प्रतिवादः )

अथ साङ्ख्यनयेनापि प्रश्न एष विचिन्त्यताम् ।
किं पुनर्जन्मवादोऽसौ सम्मतस्तत्र वा नवा ॥५८३॥
अष्टादश्यां कारिकायां श्रीमदीश्वरदेशिकाः ।
जन्ममृत्यू पुरस्कृत्य पुंबहुत्वमसाध्नुवन् ॥५८४॥
किं जन्म तत्र को मृत्युरिति व्याख्यानकोविदाः ।
श्रीमन्मिश्रमहाभागाः पर्यभाषन्त सुस्फुटम् ॥५८५॥
स्थूलसूक्ष्मेन्द्रियाणां च मनसोऽहङ्कृतेस्तथा ।
बुद्धेश्च वेदनायाश्च देहस्यास्य स्थवीयसः ॥५८६॥
अपूर्वेषामपूर्वोऽयं यः सङ्घातः प्रदृश्यते ।
तेन पुंसोऽभिसम्बन्धो यः स जन्मेत्युदीर्यते ॥५८७॥
देहादीनामुपात्तानामपूर्वेषामतः परम् ।
पुरुषेण परित्यागः स वै मरणमुच्यते ॥५८८॥
एतेनाऽनन्तसङ्ख्यानां पुरुषाणामुपाधितः ।
जन्मानि मृत्यवश्चापि प्रोच्यन्ते न तु वस्तुतः ॥५८९॥
बुद्ध्यादिस्थूलपर्यन्त—संघातोपाधिजन्मतः ।
पुरुषस्योच्यते जन्म तद्ध्वंसान्मृत्युरुच्यते ॥५९०॥

तस्माज्जन्म च मृत्युश्च संघातस्यैव निश्चितौ ।
पुरुषस्य न जन्मास्ति न मृत्युर्वास्तवः कचित् ॥५९१॥

( संघातस्य पुनर्जन्माभावः )

देहादिबुद्धिपर्यन्तो यः संघातश्च तन्मतः ।
जायते स सकृल्लोके सकृदेव विनश्यति ॥५९१॥
विनष्टस्य पुनर्जन्म देहस्यास्ति न कुत्रचित् ।
नष्टोपाधेस्ततः पुंसो न पृथक्त्वं (बहुत्वं) प्रसिद्ध्यति ॥५९२॥
सकृज्जातस्य देहादेर्विनष्टस्य ततः परम् ।
उपाधिरूपस्यैतस्य नास्ति कुत्रापि संस्थितिः ॥५९३॥
कथं पुनः पुनर्जन्म श्रीमन्मिश्रानुमोदितम् ।
सिद्ध्येदत्र यतस्तेषां देहापूर्वत्वमीहितम् ॥५९४॥
अत्रैतदेव हृदये रक्षणीयं प्रयत्नतः ।
यत्सूक्ष्मलिङ्गदेहानामपूर्वत्वं विशोषितम् ॥५९५॥
लिङ्गसूक्ष्मशरीराणां स्वीकृता नाऽत्र नित्यता ।
तेषामपूर्वतामुक्त्वा नश्वरत्वं स्फुटीकृतम् ॥५९६॥
नष्टस्य न पुनर्जन्म घटादेर्दृश्यते यथा ।
लिङ्गसूक्ष्मशरीराणां न तथाऽत्र पुनर्भवः ॥५९७॥
तस्मादपूर्वशब्दस्य दर्शनादत्र दर्शने ।
न पुनर्जन्म देहस्य लिङ्गसूक्ष्माभिधस्य वा ॥५९८॥

लिङ्गसूक्ष्मशरीराणां ध्वंसात्तु परतः पुमान् ।
उपाधिध्वंसतः शुद्धो लभते न पुनर्भवम् ॥५९९॥

( लिङ्गदेहस्य पुनर्जन्मनः प्रतिपादनम्, पूर्वः पक्षः )

वस्तुतस्तु पुनर्जन्मप्रक्रिया कापि शब्दतः ।
स्वीकृतापीश्वराचार्यैरप्रियेवाऽस्त्यपाकृता ॥६००॥
ते हि तत्रभवन्तस्तु विशेषाँस्त्रिविधाञ्जगुः ।
सूक्ष्मं च मातापितृजं प्रभूतं च विशेषतः ॥६०१॥
एतेभ्यस्त्रिविधेभ्योऽपि भिन्नं किञ्चित्कलेवरम् ।
लिङ्गाख्यमस्ति नियतमव्याहतगुणक्रियम् ॥६०२॥
आदिसर्गादाप्रलयाद् यदवस्थितमक्षतम् ।
महाप्रलयकाले च यल्लयाल्लिङ्गमुच्यते ॥६०३॥
बुद्धितत्त्वमहङ्कारो मनः कर्मेन्द्रियाणि च ।
पञ्च ज्ञानेन्द्रियाण्येवं तन्मात्राण्यपि पञ्च च ॥६०४॥
इत्येवमष्टादशभिर्विशेषेभ्यः पृथक् स्थितैः ।
लिङ्गदेहः स सम्पन्नो नैवाऽऽकल्पं प्रणश्यति ॥६०५॥
धर्माधर्माधिवासेन रागवैराग्ययोगतः ।
ऐश्वर्याद्वाऽप्यनैश्वर्यात् संसरत्येष नित्यशः ॥६०६॥
महाप्रलयकाले तु विकृतेः प्रकृतौ लयात् ।
विकृता लिङ्गदेहास्ते लीयन्ते प्रकृतौ ध्रुवम् ॥६०७॥

यावत्परं न प्रलयः सम्प्राप्नोति जगत्त्रये ।
तावत्स्थूलशरीरेषु भ्रमत्येषोऽविशङ्कितम् ॥६०८॥

तदित्थं लिङ्गदेहानामीश्वराचार्यदेशिकाः ।
सम्मन्वते पुनर्जन्म, न तु पुंसां कथञ्चन ॥ ॥६०९॥

जन्ममृत्युव्यवस्थातो यद्यप्येतैर्महोदयैः ।
अनेकत्वमथैकत्र पुंसां संसाधितं पुरा ॥६१०॥

ततश्च तेषां जन्मानि सिद्ध्यन्ति मरणानि च ।
तथापि नैतदेतेषां सम्मतं मतमुत्तमम् ॥६११॥

( पुरुषपुनर्जन्मखण्डनम्—उत्तरः पक्षः )

निर्बन्धो नित्यमुक्तश्च निःसंसरणयोगवान् ।
सम्मतः स पुमाँस्तेषामीश्वराणां समन्ततः ॥६१२॥

तस्मान्न बध्यते कश्चित् पुरुषो न च मुच्यते ।
बध्यते मुच्यते चापि केवला प्रकृतिः परा ॥६१३॥

इत्यादिभावगर्भा या द्विषष्टितमकारिका ।
तस्यां स्फुटमुवादैष भगवानीश्वरः स्वयम् ॥६१४॥

अतो या बहुता पुंसः साधितोपाधिभेदतः ।
सोपाधिजन्या बोद्धव्या न तु सा पारमार्थिकी ॥६१५॥

( लिङ्गदेहस्यापि पुनर्जन्मनः खण्डनम् )

अथाऽस्याश्च निरुक्तायाः प्रक्रियाया मनोगतम् ।
चिन्तयामः पुनर्जन्म किन्नु तेषां सुसम्मतम् ॥६१६॥

मन्ये, न तत्पुनर्जन्म सांख्यसङ्ख्यावतां मतम् ।
यतो हि लिङ्गदेहस्य विशेषाश्रितता मता ॥६१७॥
चित्रं यथाऽऽश्रयमृते च्छाया स्थाणुं विना यथा ।
न तिष्ठति तथा लिङ्गं विशेषेण विना क्वचित् ॥६१८॥
विशेषमेकमाश्रित्य लिङ्गं तिष्ठति सर्वदा ।
विनाशाच्च विशेषस्य स्वतो लिङ्गं विनश्यति ॥६१९॥
अत्र के ते विशेषाः स्युः सन्ति लिङ्गाश्रयास्तु ये ।
यद्भावाल्लिङ्गभावः स्याद् यत्क्षयाल्लिङ्गसंक्षयः ॥६२०॥
प्रभूताख्यो विशेषस्तु न हि लिङ्गाश्रयो भवेत् ।
लिङ्गैकभागतन्मात्रमण्डलात् तत्समुद्भवात् ॥६२१॥
यः पदार्थो यतो जातः स न तस्याश्रयो भवेत् ।
जायमानाऽर्थतः पूर्वं तस्यास्तित्वस्य दर्शनात् ॥६२२॥
जायमानघटात् पूर्वं मृत्तिकास्तित्वदर्शनात् ।
न घटोऽसौ मृत्तिकाया आश्रयः प्रोच्यते क्वचित् ॥६२३॥
प्रभूताख्यो विशेषो यो यो मातापितृजस्तथा ।
तावुभावपि जायेते तन्मात्रेभ्यो विलक्षणौ ॥६२४॥
जायमानावतस्तेभ्यस्तन्मात्रेभ्यो विनश्वरौ ।
प्रभूतमातापितृजौ न जायेते तदाश्रयौ ॥६२५॥

कः पुनः स विशेषोऽस्ति यः स्याल्लिङ्गाश्रयः परः ।
चित्रच्छायासमं लिङ्गं यत्र तिष्ठति सर्वदा ॥६२६॥
अथ सूक्ष्माभिधानः स्याद् विशेषः कोऽपि कल्पितः ।
ध्वंस्तेऽपि देहे तल्लिङ्गं यमाश्रित्यावतिष्ठते ॥६२७॥
प्रोच्यतां, 'तस्य सूक्ष्मस्य स्वरूपं कीदृगस्ति,' भोः ।
'कस्मात्स जायते सूक्ष्मः, कुत्र चापि प्रलीयते' ॥६२८॥
' पुरुषव्यतिरिक्तेऽस्मिँश्चतुर्विंशतिसङ्ग्रहे ।
लिङ्गाश्रया विशेषास्ते सूक्ष्माः क्वान्तर्भवन्ति च' ॥६२९॥
शान्तैर्घोरैश्च मूढैश्च यदि स्यादिन्द्रियैरयम् ।
समन्वितो लिङ्गदेहो विशेषः सूक्ष्मसंज्ञकः ॥६३०॥
लिङ्गसूक्ष्मप्रभेदोऽयं तदा न स्थातुमर्हति ।
यो लिङ्गदेहस्तस्यैव सूक्ष्मत्वेनाऽत्र वर्णनात् ॥६३१॥
महतः सूक्ष्मपर्यन्तो योऽष्टादशगणः स्मृतः ।
तमेव लिङ्गं जगदुराचार्या ईश्वरादयः ॥६३२॥

( पूर्वोत्पन्नमसक्तमित्यस्यां ४० कारिकायाम् )

स एव यदि सूक्ष्माख्यो विशेषः स्याद् विवक्षितः ।
आत्माऽऽश्रयत्वदोषेण सा व्यवस्था प्रदूष्यते ॥६३३॥
न विशेषैर्विना लिङ्गं तिष्ठतीति मतं बुधाम् ।
विशेषेषु च लिङ्गेषु सिध्येदैक्यं भवन्मते ॥६३४॥

एकतायां तु सिद्धायामुक्तो लिङ्गविशेषयोः ।
आश्रिताऽऽश्रयभावोऽयं भवेन्मिथ्या स्वभावतः ॥६३५॥

तस्मान्नहीन्द्रियैरेभिरन्वितो लिङ्गविग्रहः ।
सूक्ष्माख्यः स विशेषोऽस्ति यस्य तन्मात्रतो भवः ॥६३६॥

किञ्च ये त्रिविधाः प्रोक्ता विशेषास्तु महर्षिभिः ।
तन्मात्रेभ्यः समुत्पन्नास्ते त्रयोऽप्यविशेषतः ॥६३७॥

( 'तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः'
इत्यस्यां कारिकायां तथोक्तत्वात् ॥ )

तस्मात्क एष सूक्ष्मोऽस्ति यस्मिँल्लिङ्गं समाश्रितम् ।
इत्येव न स्फुटं प्रोचुराचार्याः सूक्ष्मदर्शिनः ॥६३८॥

तेषु सूक्ष्माभिधानास्तु केवलं परिकल्पिताः ।
इत्यूचुर्मिश्रचरणाः संशयानाः पुनर्भवे ॥६३९॥

' सूक्ष्माः—सूक्ष्मदेहाः परिकल्पिताः '
इति श्रीमिश्रचरणाः ३९ कारिकायाम् ॥

परिकल्पितताायां तु सूक्ष्मसत्त्वैव नश्यति ।
परिकल्पितवस्तूनां न हि वास्तिविकी स्थितिः ॥६४०॥

अनुमानैकगम्यत्वं परिकल्पिततां भवान् ।
यदि वक्ति, तदा किं तच्छुद्धं सूक्ष्मानुमापकम् ॥६४१॥

अस्मन्मते तु सूक्ष्माख्यो विशेषः कोऽपि वर्तते ।
यो मातापितृजस्यास्य देहस्याप्यस्ति कारणम् ॥६४२॥

आहारव्यवहाराभ्यां तन्मात्रैः पोष्यते पुरा ।
मातापितृशरीरस्थः सूक्ष्माख्यः स तु विग्रहः ॥६४३॥
तमिमं केऽपि जल्पन्ति जातिं सामान्यमेव च ।
तस्य प्रेरणया प्रायः कामो जीवेषु जायते ॥६४४॥
स एव परिपुष्टाङ्गस्तन्मात्रैः सन्ततोदितैः ।
जनयत्यात्मसदृशं मातापितृजविग्रहम् ॥६४५॥
स एव रसरूपेण प्रसरन्नथवा क्रमात् ।
घनीभूय स्वयं मातापितृजं कथ्यते वपुः ॥६४६॥
अत एव मनुष्येभ्यो मनुष्याः प्रादुरासते ।
पशुभ्यः पशवः प्रायः पक्षिभ्यश्चैव पक्षिणः ॥६४७॥
योगदर्शनभाष्यस्य वार्तिकं रचयन्नथ ।
विज्ञानभिक्षुराचार्यः कैवल्यस्य चतुर्दशे ॥६४८॥
तन्मात्राणां समुद्भूतं परिणामं विलक्षणम् ।
सूक्ष्माख्यं तत्त्वमाचख्यौ यन्न जातेर्विलक्षणम् ॥६४९॥

तथाहि—' शब्दादितन्मात्राणामेकः परिणामः पृथिवीपरमाणुः ( स्थूल पृथिव्याः परमसूक्ष्मावस्था ) अयमेव सूक्ष्मशब्देन साङ्ख्ये प्रोक्तः ' इति ॥

' इदमत्रावधेयम्—शब्दादीनां मूर्तिसजातीयानामित्यादि-वाक्यादत्र दर्शनेऽयं सिद्धान्तः—शब्दादितन्मात्रपञ्चके काठिन्यस्नेहादिव्यङ्ग्याः पृथिवीत्वादिजातयः सन्ति । तत्र पृथिवीजातीयैः शब्दादिगन्धान्तपञ्चतन्मात्रैः पृथिवीपरमाणु-

रारभ्यते, पृथिव्यांपञ्चगुणोपलम्भात् । एवं जलजातीयैः शब्दादिरसपर्यन्तैश्चतुस्तन्मात्रैर्जलपरमाणुः । एवं तेजोजातीयैः शब्दादिरूपान्तत्रितन्मात्रैस्तेजःपरमाणुः । एवं वायुजातीयाभ्यां शब्दस्पर्शतन्मात्राभ्यां वायुपरमाणुः। एवमाकाशजातीयाच्छब्द-तन्मात्रादहङ्कारसहकृतादाकाशाणुर्जायते । एवं परमाणुगणो-त्पत्त्यनन्तरं तेभ्य एवाकाशादिक्रमेण पञ्च महाभूतान्युत्पद्यन्ते' इति च ॥ 'परिणामैकत्वाद् वस्तुतत्त्वम्' इति ४ पादस्य १४ सूत्रस्य भाष्यवार्तिके श्रीमद्विज्ञानभिक्षुचरणाः ॥

सूक्ष्माभिधाना सा जातिः प्रतिबीजं व्यवस्थिता ।
तां परे रसनिष्पन्नां बीजशक्तिं प्रचक्षते ॥६५०॥

यावद् बीजेषु सा शक्तिर्नियता सुव्यवस्थिता ।
तावदुद्भूय बीजानि फलन्त्यासाद्य वृक्षताम् ॥६५१॥

विनष्टायां त्वथैतस्यां बीजशक्तौ न शक्नुयुः ।
बीजानि फलितुं नापि अङ्कुरीभवितुं तथा ॥६५२॥

सतुषा व्रीहयस्तस्मात् प्ररोहन्ति निराकुलाः ।
निस्तुषास्तु न रोहन्ति प्रयत्नैरपि भूरिशः ॥६५३॥

प्राणिष्वपि स एवास्ति क्रमः प्रकृतिनिर्मितः ।
शक्तिमन्तो हि सवितुं शक्नुवन्ति न चेतरे ॥६५४॥

सेयं सूक्ष्माभिधा शक्तिर्जातिर्वा व्यक्तिसङ्गता ।
व्यक्त्या सह समुद्भूय तया साकं विनश्यति ॥६५५॥

सा शक्तिःस्वाश्रयं हित्वा नैवाऽन्याश्रयमीहते ।
विद्यमाना स्वयं चापि नाऽऽश्रयध्वंसमीक्षते ॥६५६॥
तामेव शक्तिं सूक्ष्माख्यं विशेषं कवयो विदुः।
स मातापितृजे काये समवेतश्च राजते ॥६५७॥
समवायिनि देहेऽस्मिन् मातापितृजनामनि ।
विनष्टे नाशमायान्ति सूक्ष्माः कर्मगुणादिवत् ॥६५८॥
विशेषेषु ततस्तेषु नष्टेषु त्रिविधेष्वपि ।
कथङ्कारमयं लिङ्गदेहः स्थातुं क्षमो भवेत् ॥६५९॥
तस्मान्न लिङ्गदेहस्य पुनर्जन्मादिभावना।
सङ्ख्यावतां नयेनापि न्याय्या सत्या च भाति नः ॥६६०॥
नियतत्वं तु सूक्ष्माणां यत्साङ्ख्ये कीर्तितं पुरा ।
तदक्षयात्तु बीजानां शक्तेः पुत्रादिसंक्रमात् ॥६६१॥

( अथ पुनः पूर्वपक्षः )

द्वारि-द्वार-द्रव्यभेदाल्लिङ्गं चेद् भिद्यते त्रिधा ।
मनो बुद्धिरहङ्कारस्त्रयः स्युर्द्वारिणस्तदा ॥६६२॥
दशेन्द्रियाणि बाह्यानि द्वाराणि स्युस्ततः परम् ।
तन्मात्राणां तु पञ्चानां द्रव्येऽन्तर्भाव इष्यताम् ॥६६३॥
तदित्थमष्टादशभिः कल्पिते लिङ्गविग्रहे ।
अन्तर्भूतमबाह्यं यत् करणं द्वारिसंज्ञितम् ॥६६४॥

तस्यैव संसृतिं प्राहुः पुनर्जन्म च कोविदाः ।
मा भूत्तदितरस्यास्य लिङ्गस्यैष पुनर्भवः ॥६६५॥
तस्मादेव द्वारिभूतात्तन्मात्राणीन्द्रियाणि च ।
प्रभवन्तीति योगोऽपि सत्यः साङ्ख्ये प्रतीयते ॥६६६॥
तन्मात्राणीन्द्रियाण्येवं मा जायन्तां मुहुर्मुहुः ।
अन्तःकरणमेतत्तु जायेतैव पुनः पुनः ॥६६७॥
पूर्वोत्पन्नमसक्तं यद् धर्माधर्मादिवासितम् ।
तस्य संसरणं चाहुश्चत्वारिंश्यां विचक्षणाः ॥६६८॥
तत्कथं प्रतिषिध्येत साङ्ख्ये सङ्ख्यावतां प्रिये ।
पुनर्जन्मप्रवाहोऽयं सिद्धोऽन्तःकरणस्य यः ॥६६९॥

( अथोत्तरःपक्षः )

अत्रैतत्पूर्वपक्षस्य रमणीयं यदुत्तरम् ।
सूक्ष्मदृग्भिस्तदाचार्यैर्द्विपञ्चाश्यां निरूप्यते ॥६७०॥
यथाऽष्टादशतत्त्वात्मा निरुक्तो लिङ्गविग्रहः ।
द्वारिद्वारविभेदेन द्विधाऽभिधत सूरिभिः ॥६७१॥
लिङ्गभावाभिधानाभ्यां तथा तत्र महर्षिभिः ।
स एवाष्टादशव्यूहो निरभेदि द्विधाकृतः ॥६७२॥
तन्मात्रेन्द्रियसञ्ज्ञोऽसौ यः पञ्चदशभिः कृतः ।
तस्यार्थस्याभिधानार्थं लिङ्गमित्युपलक्षकम् ॥६७३॥

इतरेषां त्रयाणां तु बुद्ध्यहंकारचेतसाम् ।
प्रायोजि वाचकस्तत्र भावशब्दो विभेदकृत् ॥६७४॥
तदित्थं शब्दभेदेन भिन्नयोर्लिङ्गभावयोः ।
परस्परं यः सम्बन्धः सोऽपि तत्र स्फुटीकृतः ॥६७५॥
अविनाभावसम्बन्धं शब्दतस्तत्र चैतयोः ।
अभिव्यञ्जयताऽऽर्येण नित्ययोगो निरूपितः ॥६७६॥
लिङ्गभावौ ततो नित्यं समवेतौ हि तिष्ठतः ।
न लिङ्गेन विना भावो न भावेन विना च तत् ॥६७७॥
लिङ्गे प्रणष्टे चैतस्माद् द्राग्भावोऽपि विनश्यति ।
तद्वद् भावे प्रणष्टेऽपि लिङ्गं नित्यं प्रणश्यति(प्रलीयते)॥६७८॥
प्रणष्टे च ततो लिङ्गे न भावस्य पृथक् स्थितिः ।
पृथगस्तित्वशून्यस्य न भावस्य पुनर्भवः ॥६७९॥
तदित्थं भावसंज्ञस्य प्रागन्तःकरणस्य यत् ।
पुनर्जन्म निरुक्तं तत् स्वयमेव निषिध्यते ॥६८०॥
लिङ्गाश्रितोऽयं भावोऽस्ति लिङ्गं देहाश्रितं ततः ।
×भावाधिष्ठानाश्रयोऽयं देहः सूत्रेषु कीर्तितः ॥६८१॥

× 'तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः' इति हि तृतीयाध्यायस्यैकादशं साङ्ख्यसूत्रम् ॥

तस्माद्देहश्च लिङ्गं च भावश्चेति त्रयं सदा ।
सहोत्पद्य सह स्थित्वा सहैव च विनश्यति ॥६८२॥
वस्तुतस्तु प्रदीपेन दृष्टान्तीभवता गतिः ।
एतत्त्रयस्य बुध्येत लोके प्रत्यक्षदर्शिभिः ॥६८३॥
वर्तीं स्नेहं तथाऽऽश्रित्य वह्निर्यावत्प्रवर्तते ।
तावदेव प्रकाशोऽपि प्रसरत्यभितो गृहम् ॥६८४॥
स्नेहं वर्तीमथोज्झित्वा यदा वह्निर्विलीयते ।
प्रकाशोऽपि तदा तेन साकमेव विनश्यति ॥६८५॥
तद्वत्स्थूलमिमं देहं लिङ्गमाश्रित्य तिष्ठति ।
भावश्च लिङ्गमाश्रित्य भूत्वा स्थित्वा प्रलीयते ॥६८६॥
किञ्च भावात्पृथग् यस्तु लिङ्गदेह इहोच्यते ।
तत्रेन्द्रियाणां दशकमन्तर्भवति सर्वदा ॥६८७॥
दशस्वप्येष्विन्द्रियेषु पञ्च कर्मेन्द्रियाणि तु ।
न स्थूलदेहाद् भिन्नानि ह्यस्थिमांसमयत्वतः ॥६८८॥
ज्ञानेन्द्रियाण्यपि तथा यानि द्वाराणि सन्ति नः ।
तान्यपि स्थूलदेहेऽस्मिन् समवेतानि सन्ति भोः ॥६८९॥
देहो गेह इव प्रोक्तो द्वाराणीवेन्द्रियाणि च ।
तस्मान्न देहाद्भिन्नानि वर्तेरन्निन्द्रियाणि नः ॥६९०॥
(देहेन्द्रियस्य सम्बन्धं नित्यमेवात्र सूचयन् ।
आचार्योऽपीन्द्रियस्यार्थे द्वारशब्दं प्रयुक्तवान् ) ॥६९१॥

बुद्धिनाशादतो नाशान्मनसोऽहंकृतेस्तथा ।
प्राणानां च विनाशेऽपि दृश्यन्ते तानि विग्रहे ॥६९२॥
निष्प्राणे निरहङ्कारे शवाख्ये स्थूलविग्रहे ।
तन्मात्राणां तु सद्भावाद् गृह्यन्ते तद्गता गुणाः ॥६९३॥
गंन्धो रूपं रसः स्पर्शः शब्दस्तत्रानुभूयते ।
येन स्थूलस्य देहस्य मन्महे समवायिताम् ॥६९४॥
तस्मादस्मिन् विनष्टे हि तन्मात्राणीन्द्रियाणि च ।
विनश्यन्ति, ततः पूर्वं बुद्धेरन्तश्च सिध्यति ॥६९५॥
तस्मान्न स्थूलदेहस्य ध्वंसात् किञ्चित्परं तथा ।
पृथक् पुत्रादिदेहेभ्यः शिष्यते भूरिजन्मवत् ॥६९६॥
यथा चित्राणि तिष्ठन्ति न हि कुड्यादिमन्तरा ।
तथा लिङ्गं विशेषेण न विना तिष्ठति क्वचित् ॥६९७॥
स्थाणुभ्यो न विना च्छाया यथा तिष्ठति कुत्रचित् ।
न तथा लिङ्गदेहोऽपि विशेषेण विना क्वचित् ॥६९८॥
तदित्थं कुड्यरूपेण स्थाणुरूपेण चासकृत् ।
विशेषाः परिगृह्यन्ते येषां ध्वंसः स्वभावजः ॥६९९॥
चित्रच्छायादिरूपेण लिङ्गदेहो निरूपितः ।
विशेषध्वंसतो यस्यं ध्वंसः प्राज्ञैरभीष्यते ॥७००॥

विशेषाणां च विध्वंसे युक्तयो याः समीहिताः ।
ताश्च प्रागेव भवतां पुरतः सन्ति दर्शिताः ॥७०१॥

तस्माद् विशेषविध्वंसाल्लिङ्गध्वंसः स्वतः स्थिरः ।
लिङ्गध्वंसाच्च भावानां ध्वंसः सिध्यति सर्वदा ॥७०२॥

तदित्थं लिङ्गभावानां विध्वंसान्न हि कस्यचित् ।
पुनर्जन्म पुनर्मृत्युः साङ्ख्ये सिध्यति कुत्रचित् ॥७०३॥

( पूर्वः पक्षः )

ननु भोः सांख्यशास्त्रेऽस्मिन् भावास्तु द्विविधा मताः ।
केचित सांसिद्धिकाःप्रोक्ताः केचिद् वैकृतिकास्तथा ॥७०४॥

सांसिद्धिकाः प्राकृतिका निमित्तं चेति नामभिः ।
धर्माधर्मादयो नाम भावा ह्यष्टौ निरूपिताः ॥७०५॥

करणाश्रयिणश्चैते कार्यरूपं कलेवरम ।
जनयन्ति पुनस्तस्मिन् धर्मादीन् वैकृतान् गुणान् ॥७०६॥

धर्मप्रधानं करणं सृष्ट्वा धार्मिकविग्रहम् ।
ऊर्ध्वं तिष्ठति लोकेषु यत्र सोमं पिबत्यदः ॥७०७॥

अधार्मिकं तु करणमधार्मिककलेवरम् ।
प्राप्याधस्तिष्ठति प्रायो यत्र पूयं पिबत्यदः ॥७०८॥

इत्यादिभिर्व्यवस्थाभिरन्तःकरणविग्रहः ।
नवं नवं कार्यरूपं विग्रहं प्राप्य राजते ॥७०९॥

किमेतेन न संसिध्येद् अन्तःकरणवर्ष्मणः ।
पुनर्जन्म पुनर्मृत्युर्यन्मृषा प्रतिषिध्यते ॥७१०॥

( अथोत्तरः पक्षः )

अत्रैतत्प्रश्नकूटस्य रमणीयं यदुत्तरम ।
तदवश्यं निबोद्धव्यं तत्त्वजिज्ञासुभिः क्रमात् ॥७११॥
धर्मो ज्ञानं विरागश्च तथैश्वर्यं तुरीयकम् ।
चत्वार एते सात्त्विक्या बुद्धेः सन्ति गुणा मताः ॥७१२॥
अधर्मोऽज्ञानमासक्तिरनैश्वर्यममी तथा ।
चत्वारश्च गुणाः सन्ति तामस्यास्तामसा धियः ॥७१३॥

( धर्मेणोर्ध्वगमनम् )

जीवतः पुरुषस्यास्य यदा धीर्धार्मिकी भवेत् ।
ऊर्ध्वं तदा पदं प्राप्य पूजां प्राप्नोति सर्वतः ॥७१४॥
मातापित्रोर्गुरूणां च वचनस्यानुपालनम् ।
वृद्धदेवद्विजाग्र्येषु भक्तिश्रद्धानुजीवनम ॥७१५॥
निश्छलः स्नेहभावश्च सर्वप्राणिषु सम्मतः ।
हिंसात्यागो दयाभावः सौहार्दं च समन्ततः ॥७१६॥
एते चान्ये च ये धर्माः सन्ति शास्त्रेषु कीर्तिताः ।
ते सर्वे सत्त्वभावस्य प्राधान्ये सम्भवन्ति हि ॥७१७॥
एतैरेव धियो धर्मैः शोभमाना महेषणाः ।
तरुणा वृद्धिमायान्ति प्रसीदन्ति समन्ततः ॥७१८॥

( अधर्मेणाधोगमनम् )

तेषामेव ततः पुंसां यदा स्याद्धीरधार्मिकी ।
तदैव लोके विन्दन्ति नीचान्नीचतरं पदम् ॥७१९॥

अतो यदूर्ध्वगमनं यदधोगमनं तथा ।
तदेतदस्मिञ्जगति जायते वृत्तिभेदतः ॥७२०॥

( राजसाद् रागात्संसारः )

यदा हि प्राणिनो वृत्तौ रागो भवति राजसः ।
तदा सृष्टिक्रमारम्भात् कामादौ स प्रवर्तते ॥७२१॥

अनुरूपां ततः कन्यां परिणीय स पूरुषः ।
समानधर्मान् पुत्रादीनुत्पादयति संसरन् ॥७२२॥

संसारस्थितिमूलं स रागः सर्वत्र राजते ।
शैशवात् परतः पुंसस्तारुण्ये तु विशेषतः ॥७२३॥

( वैराग्याल्लयः )

तस्यैव पुनरर्थेभ्यो विरक्तिर्जायते यदा ।
प्रवृत्तयस्तदा सर्वाः प्रशाम्यन्ति क्रमागताः ॥७२४॥

प्रवृत्तिषु प्रशान्तासु कामादीनामथात्यये ।
सृष्टिक्रमपरिध्वंसाज्जायते प्रकृतेर्लयः । ॥७२५॥

( ऐश्वर्यादविघातः )

देशकालानुकूल्येन समृद्धो यस्तु सात्त्विकः ।
दानोपभोगवृत्तिभ्यां निजैश्वर्यं तनोति सः ॥७२६॥

न तदिच्छाप्रतीघातः कदाचित् कुत्रचिद् भवेत् ।
अनुकूलमिवाभायाज्जगत्तस्य महात्मनः ॥७२७॥

( अनैश्वर्यादिच्छाप्रतीघातः )

असात्त्विके तु कृपणे धनिके मलिनाशये ।
प्रतिकूला न रज्येयुर्बन्धवोऽप्यङ्गसम्भवाः ॥७२८॥
अतस्तदिच्छाव्याघातो जायेतैव स्वभावतः ।
स ह्यनैश्वर्यदोषेण दुष्टो मोहप्रदोऽशुभः ॥७२९॥

( अज्ञानाद्बन्धः )

तद्वद् यावन्न शास्त्रादिसम्यग्ज्ञानमुदेति नः ।
न यावत्साधुभिः सार्धं तत्त्वार्थश्च विचिन्त्यते ॥७३०॥
तावद्राजकुलज्ञाति–मित्रमण्डलकल्पितैः ।
विविधैर्बन्धनव्रातैरविमुक्ता नियन्त्रिताः ॥७३१॥
क्षणे क्षणे वयं दीना दुःखिता मोहमाप्नुमः ।
न जीवनसुखं किञ्चित प्राप्नुमः पशुभिः समाः ॥७३२॥
परोपदेशवशगाः स्त्रीपुत्रधनबान्धवान ।
आत्मानं चाविचारेण वञ्चकेभ्योऽर्पयामहे ॥७३३॥

( ज्ञानादपवर्गः )

जानीयाम यदि स्पष्टान् प्रकृतेः पुरुषस्य च ।
स्वरूपमुद्भवस्थान–स्थितिविध्वंसनक्रमान ॥७३४॥

न पारतन्त्र्यमस्माकं पारयेत् स्थातुमात्मनः ।
निर्द्वन्द्वा नित्यसत्त्वस्था नित्यानन्दे रमेमहि ॥७३५॥

राज्ञि राजजने भृत्ये सधने निर्धनेऽथवा ।
चाण्डालश्वपचादौ वा वृत्तिभेदकृतां भिदाम् ॥७३६॥

कल्पितां तत्त्वतो ज्ञात्वा भयसंकोचवर्जिताः ।
साधु सौहार्दभावेन वर्तितुं पारयेमहि ॥७३७॥

एष एवापवर्गोऽत्र शस्यते पारदृश्वभिः ।
यदात्मदर्शनं वृत्ति-स्थैर्येणास्मिन्स्वजीवने ॥७३८॥

तस्मात् पित्रोर्गुरूणां च स्नेहिसम्बन्धिनां तथा ।
सुहृदां विद्विषां चैव पशूनां पक्षिणां तथा ॥७३९॥

साधूनां चाऽप्यसाधूनां संसर्गाद् बलवत्तरात् ।
जायन्ते च प्रलीयन्ते प्राणिनां वृत्तयः क्रमात् ॥७४०॥

वृत्तिजन्मस्थितिध्वंसैर्भावजन्मस्थितिक्षयाः ।
भावजन्मस्थितिध्वंसैर्विकारा दैहिका मताः ॥७४१॥

तस्मात् सांसिद्धिका भावा वैकृताञ्जनयन्ति हि ।
वैकृतैस्तैश्च देहेऽस्मिन् विकाराः सम्भवन्ति हि ॥७४२॥

तैस्तैर्विकारैर्देहेऽस्मिञ्शैशवं तारुणं यथा ।
वार्धकं दृष्टिमायाति सुखिता दुःखिता तथा ॥७४३॥

देवत्वं च द्विजत्वं च दानवत्वं द्विजिह्वता ।
पशुता पक्षितेत्यादि–भावाः सर्वेऽपि लौकिकाः ॥७४४॥
एकस्मिन्नेव देहेऽस्मिन् उद्भवन्ति क्षणे, क्षणे ।
लयमायान्त्यथैकेन वृत्तिभेदेन हेतुना ॥७४५॥
तस्मादेष समस्तोऽपि सर्गो भावात्मकः स्मृतः ।
वृत्तिजन्यं तमेवैनं बौद्धिकं च प्रचक्षते ॥७४६॥
एष प्रत्ययसर्गोऽपि साङ्ख्याचार्यैरुदीर्यते ।
यस्य भेदास्तु पञ्चाशत् तत्र शास्त्रे निरूपिताः ॥७४७॥
नैतत्प्रत्ययसर्गेण निरुक्तेन महात्मभिः ।
देहध्वंसात्परं पुंसः पुनर्जन्म प्रसिध्यति ॥७४८॥
प्राप्ते शरीरभेदे तु चरितार्थास्त्रयो गुणाः ।
प्रकृतौ लयमायान्ति येन नास्ति पुनर्भवः ॥७४९॥
अष्टाषष्टितमे श्लोके गुरुणा चेश्वरेण सः ।
स्पष्टीचक्रे स्वयं वाचा सिद्धान्तः सर्वसम्मतः ॥७५०॥
“ घटे भिन्ने यथाऽऽकाश आकाशः स्याद् यथा पुरा ।
एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ॥
मनः सृजति वै देहान् गुणान् कर्माणि चात्मनः ।
तन्मनः सृजते माया ततो जीवस्य संसृतिः ॥

स्नेहाधिष्ठानवर्त्यग्नि–संयोगो यावदीयते ।
ततो दीपस्य दीपत्वमेवं देहकृतो भवः " ॥
श्रीमद्भागवतप्रोक्तैरमीभिर्वचनैरपि ।
न कस्यचित्पुनर्जन्म न मृत्युः कस्यचित्पुनः ॥७५१॥
देहे नष्टे पुमान् पुंसि+आकाश इव लीयते ।
विकृतिः प्रकृतौ तद्वल्लयमायाति च क्रमात् ॥७५२॥
ततः कस्य पुनर्जन्म कस्य मृत्युः पुनः पुनः ।
भवता प्रोच्यते श्रीमँस्तत्त्वज्ञेन महात्मना ॥७५३॥
तस्मान्न साङ्ख्यशास्त्रेऽस्मिन् पुनर्जन्मास्त्युदीरितम् ।
सकृज्जन्म सकृन्मृत्युरिति तत्रापि घोषितम् ॥७५४॥

( इति त्रयोदशः परिच्छेदः ॥ )

अथ योगाचार्याणामप्यसम्मतः पुनर्जन्मवादो नाम चतुर्दशः परिच्छेदः

अथातो योगमार्गेण पुनर्जन्म विचिन्त्यते ।
आचार्याणामभिप्रेतमनभिप्रेतमस्ति वा ॥७५५॥
भगवान् साधनाभिख्य–द्वितीयचरणस्थिते ।
सूत्रे त्रयोदशे प्राह पुनर्जन्म पतञ्जलिः ॥७५६॥
सति मूले तद्विपाको जन्मायुर्भोग एव च ।
इत्युक्त्वा दृढयाञ्चक्रे पुनर्जन्म मुनीश्वरः ॥७५७॥
तत्र कर्माशयं मूलं जन्मादीनामुवाच सः ।
कर्माशयस्य मूलं च क्लेशान् पञ्चविधानवक् ॥७५८॥

अविद्यामस्मितां रागं द्वेषं चाभिनिवेशनम् ।
इति पञ्चविधान् प्राह क्लेशाँस्ताँश्च जगद्गुरुः ॥७५९॥
पञ्चस्वपि तथैतेषु क्लेशेषु परमो महान् ।
निदानभूतः क्लेशोऽस्ति यमविद्यां प्रचक्षते ॥७६०॥
अविद्याख्यमिदं क्षेत्रमुत्तरेषां निगद्यते ।
चतुर्णामस्मितादीनां क्लेशानां जन्मकारणम् ॥७६१॥

( अविद्यास्वरूपम् )

अनित्ये नित्यताबुद्धिरशुचौ शुचितामतिः ।
दुःखे सुखमतिस्तद्वदनात्मन्यात्मतामतिः ॥७६२॥
तामिमामन्यथाबुद्धिमविद्यां पर्यभाषत ।
विपर्ययाभिधा वृत्तिरियमेवाभ्यधीयत ॥७६३॥
सेयं विपर्ययोपाख्या पञ्चपर्वा मृषामतिः ।
चित्तस्यैकतमा वृत्तिः प्रमावृत्त्या प्रबाध्यते ॥७६४॥

( पूर्वपक्ष—निष्कर्षः )

एतेन यावच्चित्तेऽस्मिन्—अविद्याख्यो विपर्ययः ।
तावदेव मृषाभूताः क्लेशास्तत्राविरासते ॥७६५॥
क्लेशप्रेरणयैवायं लोकः कर्मसु सज्जते ।
कर्मभिर्वासना नाम जन्यते च तदाशयः ॥७६६॥
तत्कर्माशयसद्भावे जात्यायुर्भोगसंज्ञकाः ।
विपाकाः सम्भवन्तीति महर्षीणां विवक्षितम् ॥७६७॥

उत्तरपक्षोपक्रमः

( तत्रादौ चित्तस्वरूपचिन्ता ॥ )

अत्रैतच्चिन्त्यते पूर्वं किन्तच्चित्तं यदाश्रयाः ।
वृत्तयः पञ्च तिष्ठन्ति प्रमाणाद्याः प्रकीर्तिताः ॥७६८॥
प्रभाषितत्वाच्चित्तस्य पुराणैः कपिलादिभिः ।
भगवानभजन्मन्ये मौनमस्य प्रभाषणे ॥७६९॥
तथापि भगवद्वेदव्यासभाष्यावलम्बनाद् ।
यत्स्वरूपमिहाभीष्टं चेतसस्तन्निरूप्यते ॥७७०॥
प्रख्या–प्रवृत्ति–स्थैर्येतिगुणत्रयवती सती ।
देहाधिकरणा ज्ञानशक्तिश्चित्तमुदीर्यते ॥७७१॥

( चित्तस्य देहसमवेतत्वम् ॥ )

न हि देहमनाश्रित्य चित्तास्तित्वमिहेष्यते ।
न च चित्तमनाश्रित्य देहभावोऽपि तिष्ठति ॥७७२॥
योगिनो ह्यस्मितामात्राद्–निजचित्ताद् यदा बहून् ।
निर्माणकायान्निर्मान्ति तदा चित्तानि तैः सह ॥७७३॥
यदि देहप्रभेदेन चित्तभेदो न गण्यते ।
निर्माणचित्तैः को लाभः कल्पितैः कायभेदतः ॥७७४॥

( साङ्ख्यसिद्धान्तावतारणम् )

एतद् भावाभिधं चित्तं न लिङ्गेन विना स्थितम ।
न च लिङ्गं विना तेन भावचित्तेन कुत्रचित ॥७७५॥

चित्तं लिङ्गमिति द्वे च न विशेषाद् विना स्थिते ।
तस्मात्तदुभयोरेको विशेषः परमाश्रयः ॥७७६॥
शरीरे च विशेषे च भेदाभावादभिन्नता ।
अभेदाच्चित्तभावस्य शरीराश्रितता स्थिरा ॥७७७॥
तदधिष्ठानाश्रयत्वं देहस्यास्ति प्रकीर्तितम् ।
साङ्ख्ये यदेव तद् योगे स्वीकृतं परमर्षिभिः ॥७७८॥
तस्माद् यावच्छरीरस्य स्थितिस्तावद्धि चेतसः ।
स्थितिर्नष्टे शरीरे तु न स्थितिश्चेतसः क्वचित् ॥७७९॥
तस्माद् योगी नित्ययुक्तो देहेन्द्रियमनोमतीः ।
अक्षिण्वन्, परितो रक्षञ्जीवन्नाप्नोति निर्वृतिम् ॥७८०॥

( जीवन्मुक्तेरेव प्राधान्यम् )

योगशास्त्रप्रणेतार आचार्यास्तु विशेषतः ।
सदेहमेव कैवल्यं प्रशंसन्ति प्रयत्नतः ॥७८१॥

तदाहुर्भगवन्तो वेदव्यासाः, 'क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति । कस्माद्? यस्माद् विपर्ययो भवस्य कारणम् । न हि क्षीणविपर्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यते', इति 'ततः क्लेशकर्मनिवृत्तिः, ( ४—३० ) इति सूत्रे ॥

'विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात्'
इति प्रथमसूत्रे भगवन्तो विज्ञानभिक्षवश्च ॥

( अथ चित्ततत्त्वार्थविचारोपक्रमः )

किञ्च भोश्चित्ततत्त्वस्य वृत्तीनां यन्निरोधनम् ।
तदेव योगमाचख्युराचार्याश्चिदचिद्विदः ॥७९८॥
तच्चित्ततत्त्वं लोकेऽस्मिन् पञ्चावस्थमवेक्षितम् ।
क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधितम ॥७९९॥
तत्र क्षिप्तस्य, मूढस्य, विक्षिप्तस्य च चेतसः ।
न जायते समाधानं निरुपप्लवमव्ययम् ॥८००॥
एकाग्रे तु ततस्तस्मिन् सद्भूतार्थः प्रकाशते ।
जायमाने यथैवार्थो घटादिर्भास्करोदये ॥८०१॥
क्लेशास्तदा क्षयं यान्ति बन्धनं खसुमायते ।
निरोधाभिमुखं चेतः स्वयमेव प्रधावति ॥८०२॥
तदेवमेकाग्रमिदं प्राहुश्चित्तं चतुर्विधम् ।
सतर्कं सविचारं च निस्तर्कं निर्विचारकम् ॥८०३॥
निरुद्धं तु यदा चित्तमसंप्रज्ञं समाहितम् ।
तदा सिद्धः स्वयं योगः परो मोक्षाय कल्पते ॥८०४॥
तदित्थमत्र चित्तस्य पञ्चावस्थाः प्रकीर्तिताः ।
किन्तु किं चित्ततत्त्वं तत्, तत्पुनः सुपरीक्ष्यते ॥८०५॥

( अथ चित्तपरिभाषाप्रकरणम् ॥ )

यस्मिन्निर्विषये वृत्तिहीने ख्यातिपराङ्मुखे ।
चितिशक्तिः स्वयं द्रष्टा वृत्तिहीनः प्रकाशते ॥८०६॥

चैतन्यमात्रः पुरुषः स्वरूपावस्थितो भवन् ।
तच्चित्ततत्त्वमाख्यान्ति प्रथमस्य तृतीयके ॥८०७॥

( तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ १ पा. ३ सू. )

यस्मिँश्च विषयाकारवृत्तिरूपे ह्यवस्थिते ।
व्युत्थिते, पुरुषो द्रष्टा विषयाकारतां व्रजेत् ॥८०८॥
यतो वृत्तिमतस्तत्त्वाद् न पृथग् ज्ञायते पुमान् ।
तच्चित्ततत्त्वमाख्यान्ति प्रथमस्य चतुर्थके ॥८०९॥

( वृत्तिसारूप्यमितरत्र ॥ १ पा. ४ सू. )

तदित्थं राजमार्तण्डे चित्ततत्त्वमभाष्यत ।
यद्दामोदरगोस्वामि–टिप्पणेनावगम्यते ॥८१०॥

तथाहि–"अत्रायं भावः–वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वाद् योगलक्षणसूत्रघटकचित्तवृत्तिनिरोधे ज्ञातव्ये चित्तज्ञानस्यावश्यकत्वेन तल्लक्षणपरत्वं राजमार्तण्डे तृतीयतुरीयसूत्रयोरुक्तम्–यस्मिन्नेकाग्रतयाऽप्यपरिणतेऽर्थान्निरुद्धे चितेः स्वरूपावस्थितिः, व्युत्थिते च सा तच्छायां भजते, तच्चित्तमिति तात्पर्यकेण ग्रन्थेन" ॥ ( साङ्ख्ययोगदर्शने चौखम्बा सं. सिरीज, बनारस. )

( अथ श्रीमद्वैनाशिकनयेन चित्तस्वरूपम् ॥ )

प्रतीतिरूपं प्रत्यर्थनियतं क्षणिकं च तत् ।
केचिद् वैनाशिकाः प्राहुश्चित्तं तत्त्वार्थचिन्तकाः ॥८११॥

अर्थाकारस्त्वनियतः प्रत्ययो योऽनुभूयते ।
सोऽनित्यः क्षणिकः प्रायः क्षणेनोत्पद्य नश्यति ॥८१२॥
तमेव प्रत्ययं प्राहुश्चित्तमेते विचक्षणाः ।
न तत्र कोऽपि संस्कारो नियतः सुचिरं स्थितः ॥८१३॥
वीचीन्यायेन सदृश–प्रत्ययानां प्रवाहतः ।
एकाग्रतायामेकार्थ–प्रत्ययो जायते चिरम् ॥८१४॥
तन्मते देहवच्चित्तं क्षणिकं देहवत्स्थिरम् ।
देहेन सह जातं सद् देहेनैव विनश्यति ॥८१५॥
तन्मते नैव संस्कारो, नैव क्वाप्यस्ति वासना ।
तादृशी नियता, येन चित्तस्य स्यात्पुनर्भवः ॥८१६॥

( योगभाष्यकृद्भगवद्वेदव्यासमतम् ॥ )

योगभाष्यप्रणेतारो भगवन्तो मुनीश्वराः ।
वेदव्यासास्तु तत्पक्षं बहुधैवाधिचिक्षिपुः ॥८१७॥
प्रत्ययानां विभिन्नत्वे क्षणिकत्वे च सम्मते ।
प्राक्तनप्रत्ययध्वंसे न पुनस्तत्स्मृतिर्भवेत ॥८१८॥
ध्वस्तस्यापि प्रत्ययस्य या पुनर्जायते स्मृतिः
तया प्रत्ययवच्चित्तं किञ्चिदेकं प्रसिध्यति ॥८१९॥
प्राक्तनप्रत्ययावेशाद् विहितस्याथ कर्मणः ।
न प्रत्यक्प्रत्ययेनेह फलं भुज्येत कर्हिचित् ॥८२०॥

प्रतीचा प्रत्ययेनाथं यत्प्राक्प्रत्ययकर्मजम् ।
भुज्यते फलमेतस्मादस्ति प्रत्ययवत्स्थिरम ॥८२१॥
किञ्चिच्चित्ताभिधं तत्त्वं यन्न क्षणिकतां गतम् ।
न च प्रत्ययमात्रं यत्—किन्तु प्रत्ययवद् ध्रुवम् ॥८२२॥
योऽहमद्राक्षमब्दादौ सोऽहमद्य स्पृशामि च ।
यश्चास्प्राक्षमहं पूर्वं सोऽहं पश्यामि चाधुना ॥८२३॥
इत्यादिषु विभिन्नेषु प्रत्ययेषु लसत्स्वपि ।
यदहंप्रत्ययोपेतं चित्तमेकं हि तद् ध्रुवम् ॥८२४॥
तदित्थं भगवद्व्यासा दोषानुद्भाव्य भूयसः ।
चित्तमेकमनेकार्थं ध्रुवमाहुरवस्थितम ॥८२५॥

तथा हि—' तस्मादेकमनेकार्थमवस्थितं च चित्तम् ',
इति 'तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः' इति ३२ सूत्रे.

त एव पुनरन्यत्र वैशारद्यार्थभाषणे ।
चित्तस्य बुद्धिसत्त्वस्य प्रकाशात्मत्वमूचिरे ॥८२६॥
स्थितिप्रवाहरूपत्वं क्वचिदाकाशकल्पताम् ।
अस्य व्याख्याय चित्तस्य सुगमत्वमजीजनन् ॥८२७॥

तथा हि—' बुद्धिसत्त्वं हि भास्वरमाकाशकल्पम् ' (१ पा. ३६ सूत्रे.)
' अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धितत्त्वस्य
रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यम् .'
( १ पा. ४७ सूत्रे. )

कल्पयित्वा क्वचिच्चार्थानयस्कान्तमणिप्रभान् ।
अयःसधर्मकं चित्तमाचख्युस्ते मुनीश्वराः ॥८२८॥

तथा हि—'अयस्कान्तमणिकल्पा विषयाः, अयःसधर्मकं चित्तम् अभिसंबध्य ( आकृष्य ) उपरञ्जयन्ति ' इति 'तदुपरागाच्चित्तस्य वस्तु ज्ञाताज्ञातम्' ४ पा. १७ सूत्रस्य भाष्ये.

क्वचिदेकत्र चित्तेऽस्मिञ् शुद्धस्फाटिकसन्निभे ।
प्रोचुः सर्वार्थबिम्बानां रूपग्रहणयोग्यताम् ॥८२९॥

तथा हि—'तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं=विषयविषयिनिर्भासं, चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिव, अचेतनं चेतनमिव, स्फटिकमणिकल्पं सर्वार्थमित्युच्यते', इति—'द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्' ४ पा. २३ सूत्रस्य भाष्ये ॥

अस्तु स्फाटिकवच्चित्तमस्तु वा दर्पणोपमम् ।
अस्तु दीपप्रभाकल्पमयःकल्पमथास्तु वा ॥८३०॥

तदेकं तु ध्रुवं चित्तं धर्मवत् परिणामवत् ।
धर्मे नष्टेऽपि यन्नैव धर्मिरूपं विनश्यति ॥८३१॥

( अत्र भगवद्वेदव्यासवैनाशिकयोस्तात्त्विको मतभेदाभावः ॥ )

किमत्र भगवद्वेदव्यासवाक्यं प्रमापकम् ।
वैनाशिकानामाहोस्वित् किन्नु वाक्यं प्रमापकम् ॥८३२॥

अस्मिन्संशयकूटे तु कूटवत्पुरतःस्थिते ।
नोभयोरन्तरं किञ्चिदुत्पश्यामीह वास्तवम् ॥८३३॥

तथा हि—

एकं सदपि यच्चित्तं परिणामि गुणोद्भवम् ।
किं तदेकं सदा स्थातुं प्रभवेच्चाप्यविक्रियम् ॥८३४॥

( चित्तस्य कुत्रान्तर्भावः ? चित्तं न पुरुषः । )

प्रकृतिः पुरुषश्चेति द्वावेवार्थौ सदा स्थितौ ।
ययोः पुरुषनामायं पदार्थस्तु सदा स्थिरः ॥८३५॥
परिणामो न यत्रास्ति न क्रिया न च विक्रिया ।
यत्र गन्धोऽपि नैवास्ति प्रधानगुणदोषयोः ॥८३६॥
न चित्तपदवाच्योऽसौ पुमान् कस्यापि सम्मतः ।
तं तु द्रष्टारमाख्यान्ति साक्षिणं प्रकृतेः परम् ॥८३७॥

( चित्तं नाऽव्यक्तम् ॥ )

प्रकृतिश्च परा यापि सापीह द्विविधोच्यते ।
एका ह्यव्यक्तशब्देन व्यक्तशब्देन चापरा ॥८३८॥
व्यक्तं हेतुमदव्यापि, नाशवद् , व्यक्तिभेदतः ।
विविधं, कारणं स्वीयमाश्रितं, सक्रियं तथा ॥८३९॥
अव्यक्तं हेतुरहितं, व्यापकं, नित्यमव्ययम् ।
केवलं, लिङ्गतो भिन्नं, परिस्पन्दविवर्जितम् ॥८४०॥
किं भोस्तदुच्यतां, चित्तं भवदीयं यदस्ति सत् ।
तत्किमव्यक्तरूपं वा किंवा तद् व्यक्तमुच्यते ॥८४१॥

चित्तस्याव्यक्तरूपत्वे ह्यनेकत्वं विनश्यति ।
चित्तानेकत्ववादश्च भाष्यकर्तुरतिप्रियः ॥८४२॥

तथा हि—'तस्मात्स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः । स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्तन्ते' ॥ इति ४ पादस्य १६ सूत्रस्य भाष्ये ॥

भगवान् सूत्रकारोऽपि वस्तुसत्ताप्रसाधने ।
प्रस्तुते, चित्ततत्त्वस्य भेदानैकत्वमूचिवान् ॥८४३॥

तथा हि—'वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः', इति ४ पादस्य १५ सूत्रम् ॥

समाधौ केवलीभावे प्रादुर्भूतेऽथ जीवतः ।
यश्चित्तविलयः प्रोक्तः सोऽप्यसिद्धो भवेत्ततः ॥८४४॥

आचार्या गुरुवर्याश्च कैवल्योदयनात्परम् ।
चित्तस्य विलयं प्रोचुर्जीवन्मुक्तस्य देहिनः ॥८४५॥

तथा हि—'व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते । तस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनो, न स्थितिहेतवः ॥ यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्तते, तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठोऽतः शुद्धमुक्त इत्युच्यते' इति तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिरिति समाधिपादस्य ५१ सूत्रे ॥

( चित्तस्य व्यक्तान्तर्गतत्वम् ॥ )

तस्मान्न चित्तमव्यक्तं वक्तुं केनापि शक्यते ।
व्यक्तं विकृतमेवास्तु चित्तमव्यक्तसम्भवम् ॥८४६॥

व्यक्तस्य कार्यरूपत्वाच्चित्तं कार्यं, न कारणम् ।
व्यक्तस्य चाप्यनित्यत्वादनित्यं चित्तमस्थिरम् ॥८४७॥

क्षणिकत्वादनित्यस्य चित्तं क्षणिकमुच्यते ।
देहभेदेन भिन्नत्वादव्यापित्वं तथेष्यते ॥८४८॥

सक्रियं वा क्रियारूपमसंख्यं देहभेदतः ।
धर्मक्रियास्वरूपत्वादाश्रितं तन्न चाश्रयः ॥८४९॥

वृत्तिसंघातरूपत्वादेतत्सावयवं स्मृतम् ।
सदैव परतन्त्रं च न स्वतन्त्रं, शरीरवत ॥८५०॥

देहस्य क्षणिकत्वेऽपि रूपसादृश्यसन्ततेः ।
सद्भावान्निधनं यावद् यथैकत्वमवस्थितम् ॥८५१॥

तद्वत् प्रत्ययसादृश्य–सन्ततेः सन्ततोदयात् ।
चित्तमेकमनेकार्थं भासते चौपचारिकम् ॥८५२॥

देहेन सह जातत्वाद्देहेन सह वर्धनात ।
देहेन सह नाशित्वाद्देहाङ्गं चित्तमिष्यते ॥८५३॥

सन्ततैकत्वभावस्य प्रवाहादेकता यथा ।
देहस्य भासते तद्वदेकताऽस्यौपचारिकी ॥८५४॥

अतो नैवान्तरं किञ्चिदुत्पश्यामीह वास्तवम् ।
भाष्यकृद्भगवद्व्यासवैनाशिकमतद्वये ॥८५५॥

( अथ पूर्वपक्षः )

ननु भो भगवद्वेदव्यासास्तु परमर्षयः ।
चित्तस्य धर्मितां प्राहुः किञ्चास्य परिणामिताम् ॥८५६॥
यो धर्मी परिणामी च स तु नित्यो न चेतरः ।
निदर्शनमिह प्रोक्ताः पार्थिवाः परमाणवः ॥८५७॥
कपालत्वघटत्वाद्या धर्माः कामं विनश्वराः
सन्तु धर्मिषु, नैतेन परमाणुष्वनित्यता ॥८५८॥
कटकत्वे कुण्डलत्वे विनष्टेऽपीह काञ्चनम् ।
यथा नित्यं तथा चित्तं धर्मि नित्यं प्रकल्पते ॥८५९॥
तस्माच्चित्तस्य नित्यत्वमेकत्वं च व्यवस्थितम् ।
नैवौपचारिकं नापि वैनाशिकमतैकता ॥८६०॥

( अथोत्तरः पक्षः )

भगवन्! वस्तुतो धर्मी नित्यो नश्चाप्यविक्रियः ।
सम्मतस्तत्र नैवास्ति प्रतिवादो मनागपि ॥८६१॥
किन्त्वत्र स्फुटमाख्येयं को धर्मः कश्च धर्मवान् ।
कस्यानित्यत्वमिष्टं भोः कस्य नित्यत्वमिष्यते ॥८६२॥
भगवान् भाष्यकारस्तु स्वशब्देनैव, दृश्यताम् ।
चित्तस्य धर्मतां प्राह, न तु धर्मित्वमूचिवान् ॥८६३॥

तथा हि—"तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसानः। नित्येषु धर्मिषु गुणेष्वलब्धपर्यवसानः" ॥ इति—'क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः' इति ४ पादस्य ३३ सूत्रस्य भाष्ये ॥

धर्मस्य चलतां, मन्ये, भवन्तोऽप्यनुमन्वते ।
धर्मिणो निश्चलत्वं च, व्यवहारो हि तादृशः ॥८६४॥

तच्चलत्वाचलत्वाभ्यां धर्मधर्मिनिरूपणम् ।
विदध्याम, समाश्रित्य भगवद्भाष्यकृद्वचः ॥८६५॥

भगवान् भाष्यकारस्तु परिणामक्रियाश्रयम् ।
चलं च गुणवृत्तं च चित्तमाचष्ट चेष्टितम् ॥८६६॥

तथा हि—"चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम्', इति साधनपादस्य, १५ सूत्रस्य, भाष्ये ॥

( वस्तुतस्तु धर्मधर्मिणोरभेदस्य साधनम् ॥ )

वस्तुतस्तु न भेदोऽयं सम्मतो धर्मधर्मिणोः ।
अत्राभेदो ह्यभिप्रेतः प्रशस्तः पारमार्थिकः ॥८६७॥

तथा हि—" परमार्थतस्त्वेक एव परिणामः। धर्मिस्वरूपमात्रो हि धर्मः। धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यते ", इति विभूतिपादस्य १३ सूत्रस्य भाष्ये ॥

धर्मधर्मिप्रभेदोऽसौ यदि स्यात् पारमार्थिकः ।
भूतेन्द्रियादयोऽप्यर्थास्तदा स्युर्धर्मतः पृथक् ॥८६८॥

धर्मतः पृथगरितत्वे धर्मिणां च व्यवस्थिते ।
घटत्वाद् भिन्न एव स्याद् घटो धर्मी निराकुलः ॥८६९॥

घटत्वे च ततो नष्टे घटस्तिष्ठेन्निरामयः ।
प्रणष्टे च पटत्वेऽपि पटः प्रावृणुयाज्जगत् ॥८७०॥

किन्तु नष्टेषु धर्मेषु धर्मिनाशः प्रदृश्यते ।
तस्मान्न भेदः सिद्धोऽस्ति कुत्रचिद्धर्मधर्मिणोः ॥८७१॥

तस्मात् क्षयिषु धर्मेषु धर्मी नैकोऽनुगच्छति ।
न कूटस्थतया कोऽपि धर्मी नित्यश्च तिष्ठति ॥८७२॥

एनमेवार्थमाचार्या वेदव्यासा महर्षयः ।
प्रब्रुवन्ति विशेषेण तृतीयस्य त्रयोदशे ॥८७३॥

तथा हि—" अपर आह—धर्मानभ्यधिको धर्मी । पूर्वतत्त्वानतिक्रमात् पूर्वापरावस्थाभेदमनुपतितः कौटस्थ्येन विपरिवर्तेत, यद्यन्वयी स्यात् । इत्ययमदोषः—एकान्तानभ्युपगमात् ॥ तदेतत् त्रैलोक्यं व्यक्तेरपैति । कस्माद् ? नित्यत्वप्रतिषेधाद् " इति विभूतिपादस्य, १३ सूत्रस्य, भाष्ये ॥

तस्मादस्तु सुखं चित्तं धर्मि वा धर्म एव वा ।
न तस्येहास्ति नित्यत्वं क्वचिदङ्गीकृतं बुधैः ॥८७४॥

यद्यप्येवं धर्मनाशाद् धर्मिनाशे दृढीकृते ।
अव्यक्तस्याप्यनित्यत्वमनिष्टं साध्यते परैः ॥८७५॥

किन्तु नैतद् भयस्थानमस्माकं सत्पदार्थिनाम् ।
प्रमाणैरनुमानैश्च तत्सत्त्वस्यानुमोदनात् ॥८७६॥

चित्तं तु व्यक्ततापन्नं कार्यमव्यक्तधर्मिणः ।
देहवज्जायतेऽनित्यं देहवच्च प्रणश्यति ॥८७७॥

अत एव क्षणिकतां शून्यतां चलतां तथा ।
गुणवृत्तत्वभावेन भाष्यकाराः प्रचक्षते ॥८७८॥

तथा हि—" एवं धर्मलक्षणावस्थापरिणामैः शून्यं न क्षणमपि गुणवृत्तमप्यवतिष्ठते । चलं च गुणवृत्तम् " इति तत्रैव ३ पादस्य, १३ सूत्रे, भाष्ये )

देहवद्वृत्तिमत्वाच्च देहवद्गुणयोगतः ।
देहभेदाद् विभिन्नत्वं चित्तानामस्ति सम्मतम् ॥८७९॥

तथा हि—" तस्मात् स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः ।
स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्तन्ते " ॥
इति कैवल्यपादस्य, १६ सूत्रस्य, भाष्ये ॥
( अत्र श्रीमद्भगवत्पतञ्जलिचरणसम्मतेऽस्मन्न्यासः ॥ )

भगवन्तः सूत्रकाराः पतञ्जलिपदाम्बुजाः ।
द्रष्टृदृश्यप्रभेदेन द्विविधं तत्त्वमुज्जगुः ॥८८०॥

द्रष्टृत्वमत्र चित्तस्य किं वा दृश्यत्वमीहितम् ।
एतदप्यनुषङ्गेण चिन्त्यं तत्त्वार्थचिन्तकैः ॥८८१॥

द्रष्टृदृश्योपरक्तं यत् सर्वार्थग्राहकं मनः ।
तदेव चित्तमाख्यान्ति ते त्वत्र परमर्षयः ॥८८२॥

तथा हि—'द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्', इति कैवल्यपादस्य, २३ सूत्रम् ॥

( चित्तस्य द्रष्टृत्वाभावः )

तत्र न द्रष्टृरूपं तद् भवितुं चित्तमर्हति ।
तस्मिन् द्रष्टरि चित्ते च भाति भेदो महान् यतः ॥८८३॥
द्रष्टा दृशिस्वरूपोऽस्ति शुद्धः कूट इव स्थिरः ।
चित्तं चञ्चलमाचख्युरशुद्धं परिणामि च ॥८८४॥
द्रष्टा त्वाकाशवन्नित्यं छायाबिम्बप्रतिग्रहे ।
दर्पणस्येव चित्तस्य परमो ह्युपकारकः ॥८८५॥
यथाऽऽकाशस्थितं शुद्धं दर्पणं सूपयुज्यते ।
चित्तमेतत् तथा द्रष्टुर्योगाच्छायामुपाश्नुते ॥८८६॥
आकाशे दर्पणे चेत्थं यावान् भेदो विराजते ।
तावान् द्रष्टरि चित्ते च महान् भेदः प्रभासते ॥८८७॥
तस्मान्न चित्ततत्त्वस्य द्रष्टृत्वमिह युज्यते ।
दृश्येष्वेव पदार्थेषु तस्यान्तर्भाव इष्यते ॥८८८॥

( दृश्यार्थस्वभावः )

यस्तु दृश्यः पदार्थोऽसौ स क्रियाशक्तिसंयुतः ।
क्षणे क्षणे परिणमन्नव्यक्तत्वं प्रपद्यते ॥८८९॥

अव्यक्तेश्च पुनर्व्यक्तिं व्यक्तेरव्यक्ततां पुनः ।
प्राप्नुवन्न क्षणायापि स्थिरतामेति दीपवत् ॥८९०॥
यथा प्रज्ज्वलिते दीपे सन्ततस्वक्रियाबलात् ।
स्नेहाणुः सन् स्वयं ज्योतिः क्षणेनैव न दृश्यते ॥८९१॥
तमो नाम तथा द्रव्यं रजसा क्रियया स्वया ।
शक्तिप्रकाशरूपेण परिणम्य प्रलीयते ॥८९२॥
अव्यक्तिः प्रलयो ध्वंसो नाशः किञ्चाप्यदर्शनम् ।
शब्दानेतान् समानार्थान्—अत्राहुस्तत्त्वकोविदाः ॥८९३॥
तस्माद् यदि भवच्चित्तं दृश्यान्तर्भूतमिष्यते ।
तदा तस्यापि मन्तव्यं क्षणिकत्वं प्रकाशवत् ॥८९४॥

( गुणानामन्योन्याश्रयत्वम् ॥ )

तमो रजस्तथा सत्त्वमन्योन्याश्रितमुच्यते ।
न तेषां पृथगस्तित्वं देशे कस्यापि सम्मतम् ॥८९५॥
रजःक्रियां विना नैव सत्त्वमुद्भवति क्वचित् ।
रजःक्रिया च तमसः पृथग्देशे न दृश्यते ॥८९६॥
तस्माद् यदैव तमसः प्रादुर्भूतिस्तदा क्षणे ।
रजसा सह तत्सत्त्वं प्रादुर्भवति सङ्गतम् ॥८९७॥

( चित्तजन्मनिरूपणम् )

अत एव ह्यहङ्कारात् प्रादुर्भूतैस्तमोमयैः ।
तन्मात्रैः सह जांयन्ते चित्तं बाह्येन्द्रियाणि च ॥८९८॥

बाह्येन्द्रियाणां दशकं चित्तमेकादशं तथा ।
तन्मात्राणि च पञ्चैष गणः षोडशकः स्मृतः ॥८९९॥

साङ्ख्ययोगप्रवक्तारस्तस्मादेव महर्षयः ।
अहंकारात्समुत्पत्तिं प्रोचुः षोडशकस्य ते ॥ ॥९००॥

तथा हि—"प्रकृतेर्महाँस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः" । इति ।

"तत्राकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्ध-तन्मात्राणामविशेषाणां विशेषाः । तथा श्रोत्रत्वक्चक्षुर्जिह्वा-घ्राणानि बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थानि कर्मेन्द्रि-याणि, एकादशं मनः सर्वार्थम्, इत्येतान्यस्मितालक्षणस्या-विशेषस्य विशेषाः । गुणानामेष षोडशको विशेषपरिणामः" इति 'विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि,' इति—साधनपादस्य, १९ सूत्रस्य, भाष्ये ॥ साङ्ख्याचार्या अस्मिन् षोडशके गणे—एकादशेन्द्रियैः साकं पञ्च तन्मात्राणि गणयन्ति । भाष्यकृद्भगवद्वेदव्यासास्तु एकादशेन्द्रियैः साकं तन्मात्रव्यतिरिक्तानि पञ्च भूतानि गणयन्ति ॥ साङ्ख्या-चार्याः सूक्ष्माख्यां जातिं, मातापितृजं कलेवरं, घटपटादीन् प्रभूतान् पदार्थांश्च विशेषसंज्ञया परिचाययन्ति, केवलानि पञ्च तन्मात्राणि—अविशेषसंज्ञया परिचाययन्ति, महान्तम्-अहंकारं पञ्च कर्मेन्द्रियाणि-पञ्च ज्ञानेन्द्रियाणि—पञ्च तन्मा-त्राणि चेत्येवं सप्तदशकं गणं लिङ्गपदेन परिचाययन्ति । ( यदा तु महतो वा—अहंकाराद्वा मनः पदार्थो भिन्नो भवति तदा तन्मतेऽष्टादशको गणो लिङ्गपदवाच्यो भवति ॥) योगभाष्यकाराणां मते त्वेतत्सर्वं विपरीतमस्ति । तेषां मते

महत्तत्त्वं केवलं लिङ्गपदवाच्यं भवति, पञ्च तन्मात्राणि मनश्चेति षडर्था अविशेषपदवाच्या भवन्ति, पञ्च भूतानि, पञ्च कर्मेन्द्रियाणि—पञ्च ज्ञानेन्द्रियाणि—मनश्चेत्येष षोडशको गणश्च विशेषपदवाच्यो भवति ॥ मतभेदमूलभूतं रहस्यं विपश्चिद्भिः स्वयमेव चिन्तनीयम् ॥

मातापित्रोरहङ्कारस्तन्मात्राणि मनस्तथा ।
दश बाह्येन्द्रियाण्येवं सह प्रादुर्भवन्ति हि ॥१०१॥

स्नेहवर्तीपदं तत्र तन्मात्रैरधिगम्यते ।
ज्योतिषः प्राप्यते साम्यं चित्तेन च तथेन्द्रियैः ॥१०२॥

तदित्थं चित्ततत्त्वस्य प्रकाशपदसंश्रयात् ।
तदधिष्ठानरूपत्वात्तन्मात्राणां च नित्यशः ॥१०३॥

अयं षोडशतत्त्वानां गणो यः प्राङ् निरूपितः ।
स दृश्येष्वेव तत्त्वेषु नूनमन्तर्भविष्यति ॥१०४॥

तथा हि—'प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्', इति द्वितीयपादस्य १८ सूत्रम् ॥

( अथ पूर्वः पक्षः )

यदि भोश्चित्ततत्त्वं तद् दृश्यान्तर्भूतमिष्यते ।
तत्कथं तत्र दृश्यानां छायाबिम्बस्य दर्शनम् ॥१०५॥

दृश्यानां बिम्बरूपत्वे तच्छायाग्राहकस्तु यः ।
स दृश्येभ्यः सदा भिन्नो व्यवहारे प्रदृश्यते ॥१०६॥

चन्द्रबिम्बप्रतिच्छाया—ग्राहकं निर्मलं जलम् ।
चन्द्राद् भिन्नं, न तच्चन्द्रः क्वचित्केनापि कथ्यते ॥१०७॥

तद्वद्दर्पणमप्येतद् दृश्यात्तिष्ठति दूरतः ।
तस्माद् दृश्योपरक्तं यत् तद् दृश्याद् भिन्नमिष्यते ॥१०८॥

तथात्वे च ततश्चित्तं दृश्याद् भिन्नमपेक्षितम् ।
यतस्तद् दृश्यतत्त्वानां छायाभिरुपरज्यते ॥१०९॥

( अथोत्तरः पक्षः )

रज्यमानं तु सिद्धान्ते भिद्यते ह्युपरञ्जकात् ।
दृश्यान्तरेभ्यश्चित्तं तन्नूनमेवं विभिद्यते ॥११०॥

किन्तु चन्द्रो यथा द्रव्यं जलं द्रव्यं तथा मतम् ।
द्रव्यत्वमुभयत्रापि समानं जलचन्द्रयोः ॥१११॥

द्रव्यत्वं च यथा दृश्ये दर्पणे द्रव्यता तथा ।
न तयोर्द्रव्यताभेदः कस्यापि विदुषः प्रियः ॥११२॥

तथोपरज्यमानेऽपि चित्ते दृश्यत्वमन्वितम् ।
नैवोपरञ्जकस्थेन दृश्यत्वेन प्रबाध्यते ॥११३॥

तस्माद् दृश्योपरक्तेऽपि चित्ते दृश्यत्वसम्भवात् ।
दृश्यदेहगताः सर्वे तिष्ठन्ति क्षणिका गुणाः ।११४॥

ततः क्षणिकदेहेऽस्मिञ् जननात्परतः स्थिते ।
यथैकत्वमतिर्जन्तोस्तथा चित्तेऽपि जायते ॥११५॥

एकत्वं च ध्रुवत्वं च यदि देहस्य सम्मतम् ।
चित्तस्यापि तदैकत्वं ध्रुवत्वं साधु सम्मतम् ॥११६॥
यच्चौपचारिकं देहे तद् ध्रुवैकत्वमिष्यते ।
चित्तस्याप्युभयं सिध्येन्नूनमेवौपचारिकम् ॥११७॥
'आसं प्राग् लघुकायोऽहमद्य स्थूलकलेवरः' ।
'प्रागहं स्थूलकायः सन्नद्य क्षीणकलेवरः' ॥११८॥
इत्यादिभिः प्रत्ययैस्तु देहः क्षणिक इष्यते ।
तद्वद् देहसमं चित्तं क्षणिकं नूनमिष्यताम् ॥११९॥
अत एव न मे भाति भेदः कोऽपीह तात्त्विकः ।
भाष्यकृद्भगवद्व्यास–वैनाशिकमतद्वये ॥१२०॥

( चित्ते संस्काराणां स्थिरताया असम्भवः )

किञ्च भोः, पूज्यचरणाः सूत्रकारा महर्षयः ।
द्रष्टृदृश्योपरक्तं तच्चित्तमाहुः स्वया गिरा ॥१२१॥
यावद् दृश्यः पदार्थश्च दर्पणस्य पुरः सरेत् ।
तावत्तेन पदार्थेन दर्पणं तूपरज्यते ॥१२२॥
दृश्यस्तद्देशतो दूरे यदा तिष्ठति पृष्ठतः ।
न तदा दर्पणं तेन शुद्धमप्युपरज्यते ॥१२३॥
यावच्च जलपात्रस्य नभस्युपरि चन्द्रमाः ।
तिष्ठति, प्रतिबिम्बोऽपि तावत्पतति तज्जले ॥१२४॥

चन्द्रे वा जलपात्रे वा निर्याते वाऽपसारिते ।
न चन्द्रप्रतिबिम्बेन तज्जलं तूपरज्यते ॥९२५॥
स्फाटिकस्य मणेर्यावत् समीपे कुसुमं भवेत् ।
तावदेव मणिस्तस्य तद्रागेणोपरज्यते ॥९२६॥
कुसुमे वा मणौ वापि दूरतस्त्वपसारिते ।
न मणौ कौसुमो रागः कदाचिदपि दृश्यते ॥९२७॥
एतेन यावद् दृश्यस्य चित्तेनास्ति समं स्थितिः ।
तावदेव चलं चित्तं तेन रागेण रज्यते ॥९२८॥
दृश्ये तु विषये दूरं गते चित्तप्रदेशतः ।
नोपरक्तं भवेच्चित्तं विषयस्य त्वदर्शनात् ॥९२९॥
कथं पुनस्तथा चित्ते मणिभे दर्पणप्रभे ।
उपरागाभिधानोऽसौ संस्कारः स्थिरतामियात् ॥९३०॥

( समाहारः )

तस्माद्देहानुगं चित्तं देहमाश्रित्य जायते ।
दिह्यमानेन देहेन साकमेवोपचीयते ॥९३१॥
देहस्यैवाङ्गभूतत्वात् तस्मिन्नष्टे लयं गते ।
देह्योऽपि नाशमायाति शवत्वं चोपपद्यते ॥९३२॥
न तत्र चित्ते संस्काराः सन्ति केचन तादृशाः ।
ये पुनर्जन्मनः पश्चात्सम्भवेयुः प्रवर्तकाः ॥९३३॥

अत एव जगद्वन्द्या गुरूणां गुरवः पुरा ।
श्रीपतञ्जलयः प्रोचुः ' सति मूले ' पदद्वयम् ॥१३४॥
तथा हि—'सति मूले तद्विपाको जात्यायुर्भोगाः' इति २ । १३ ॥
मूलं कर्माशयश्चात्र प्रोच्यते जन्मनः पुनः ।
विद्यमाने हि तन्मूले पुनर्जन्मापि सम्भवेत् ॥१३५॥
'मूलं नास्ति कुतः शाखा' इति न्यायानुसारतः ।
मूलमेवात्र नैवास्ति शाखानां सम्भवः कुतः ॥१३६॥
कर्माशयस्य मूलस्य क्लेशा मूलमुदीरिताः ।
ते क्लेशा वितथाः सन्ति केवलं कल्पनाभुवः ॥१३७॥
कल्पना न पदार्थोऽस्ति मिथ्याज्ञानाद् विलक्षणः ।
कोऽपि, यः सुचिरं तिष्ठेद् नष्टे चित्ते च विग्रहे ॥१३८॥
अविद्या नाम नैवार्थो नियतः कोऽपि वास्तवः ।
तन्मूला नैव विद्यन्ते क्लेशाः केचन वास्तवाः ॥१३९॥
तन्मूलो नैव कोऽप्यस्ति सत्यः कर्माशयः स्थिरः ।
तदभावाच्च नैवास्ति पुनर्जन्मात्र कस्यचित् ॥१४०॥
तदभावद्योतनार्थः 'सति मूले' पदद्वये ।
भावलक्षणसप्तम्याः प्रयोगो, नापरार्थकः ॥१४१॥

( अथ पूर्वः पक्षः )

प्राग्जन्मन्यनुभूतस्य मृत्युदुःखस्य संस्मृतेः ।
इह जन्मन्यथोदेति 'भूयासम्' इति भावना ॥१४२॥

सा कृमेरपि जातस्य जायते ब्रह्मणस्तथा ।
यथा जीवस्य सर्वस्य पुनर्जन्मानुमीयते ॥१४३॥

( अथोत्तरः पक्षः ॥ )

नानुमानमिदं किन्तु युक्तमालोचयामहे ।
न मृत्युदुःखस्मरणाद् 'भूयासम्' इति भावना ॥१४४॥
'भूयासम्' इति भावोऽसौ प्रकृतेरेव सुस्थिरः ।
योऽव्यक्ताद् व्यक्तमायाति गुणधर्मान्तरैः सह ॥१४५॥
अविद्ययैव जीवात्मा भूयासमिति भावनाम् ।
मृत्युदुःखस्मृतेर्जातामधिगच्छति मन्दधीः ॥१४६॥
अत एतादृशीं वृत्तिमविद्याद्यस्मिताभुवम् ।
प्रोच्चैरभिनिवेशं ते प्रोचुः प्राञ्चो मुनीश्वराः ॥१४७॥
तस्मादेष तु सिद्धान्तः, 'सर्वो जातो मरिष्यति ।
न मृतः कोऽपि लोकेऽस्मिन् पुनर्जन्मा जनिष्यते' ॥१४८॥
सकृज्जन्म सकृन्मृत्युस्तस्माद् योगेऽपि गीयते ।
न स्थिरा काऽपि तत्रोक्तिः पुनर्जन्मप्रसाधिनी ॥१४९॥
ये बलादथ मन्यन्ते, ' वर्तते मे पुनर्भवः ' ।
भूयात्पुनर्भवस्तेषां किं कुर्याम तदाग्रहे ॥१५०॥
ये सन्त्यकुशला लुब्धाः सतृष्णाः काममोहिताः ।
तेषां नियन्त्रणायैव पुनर्जन्मेरितं क्वचित् ॥१५१॥

न तेन स भवेदत्र सिद्धान्तः सर्वसम्मतः ।
कुशलस्य पुनर्जन्म यतः शास्त्रेषु खण्डितम् ॥१५२॥

तथा हि—' प्रत्युदितख्यातिः क्षीणतृष्णः कुशलस्तु न जनिष्यते '
इति ४ । ३३ सूत्रभाष्ये ॥

तस्मादखिलमेतद् यद् दृश्यतेऽत्र चराचरम् ।
तत्सर्वं भगवद्रूपं स्थूलसूक्ष्मोभयान्वितम ॥१५३॥
सर्वेऽपि प्राणिनस्तस्मादीश्वरांशा न संशयः ।
त्वमहंभावमापन्ना नैवात्मानं विजानते ॥१५४॥
दृढाहंभावनापन्नाः स्थापयन्तः स्वगौरवम् ।
परनिन्दां निजश्लाघां प्रथयन्ति पदे पदे ॥१५५॥
जीवानामेष संसारः सामान्यः प्राकृतः स्थिरः ।
नाऽऽनन्दो न सुखं शश्वत् प्रायशस्तैरुपेयते ॥१५६॥
यद्यमन्दपरानन्दसुखसम्पत्तिलालसा ।
भवतस्तदवश्यं भो आत्मरूपं विचिन्त्यताम् ॥१५७॥
आत्मरूपावबोधाद्धि दूयन्ते दुःखवृत्तयः ।
स्वभावतो मिथः पश्चाज्जायन्ते बन्धुवृत्तयः ॥१५८॥
जीवनित्यत्ववादाद्धि दोषैः प्रादुरभूयत ।
जीवनित्यत्वतर्काद्धि सत्यं दूरे पलायत ॥१५९॥

स्वर्गाङ्गनानां गीतानामालिङ्गनसमीहया ।
कल्पद्रुमफलास्वादजिह्वालोलतयाऽनया ॥९६०॥

पीयूषपानमानादिलाभलोभानुबद्धया ।
तृष्णया पीडिताः केचित् तान्त्रिकाणां वशंगताः ॥९६१॥

अर्थसाध्यक्रियासिद्धौ व्यापृता न हिताहितम ।
अर्थार्जने समीक्षन्ते न्यायान्यायं न चापि ते ॥९६२॥

अहन्तया ममत्वेन परिभूता अमी जनाः ।
मरणान्तेऽपि न स्वास्थ्यं प्राप्नुवन्ति जनोचितम् ॥९६३॥

भ्रातृभिर्भ्रातरस्तस्माद् बन्धुभिर्बन्धवस्तथा ।
जन्मान्तरे फलेच्छातो विगृह्णन्ति श्वजातवत् ॥९६४॥

वयमेकस्य तत्त्वस्य कार्यभूतास्तदंशजाः ।
तत्र जाताःस्थितास्तत्र तत्रैवान्तं लभामहे ॥९६५॥

न राजा न प्रजास्तस्मान्न धनी न च निर्धनः ।
कोऽपीह दृश्यते प्राणी यत्र साम्यं न दृश्यते ॥९६६॥

जन्ममृत्यू समौ लोके समेषामेव देहिनाम् ।
बाल्य–यौवन–वार्धक्यदशा न विषमा अपि ॥९६७॥

शब्दरूपरसस्पर्शगन्धाद्यालोचनं यथा ।
वस्त्वादानं विहरणं वचनं चिन्तनं तथा ॥९६८॥

उत्सर्ग इन्द्रियानन्दः समानाः सर्वदेहिनाम् ।
न मनागपि भेदोऽत्र प्रेक्ष्यते परमार्थतः ॥१६९॥

तस्माद् यदि परानन्दसन्तोषसुखलालसा ।
तवास्ति भगवन्नास्मिञ्जीवत्येव कलेवरे ॥१७०॥

तदा परमपुण्यानामृषीणां पारदृश्वनाम् ।
मार्गमालम्ब्य वीक्षस्व निजं रूपं पुनः पुनः ॥१७१॥

कामं क्रोधं ततो लोभं मोहं मात्सर्यमेव च ।
समुत्सृज्य निजं रूपं चिन्तयैकान्तचेतसा ॥१७२॥

नूनं यावन्न चित्तस्य स्थिरतां यान्ति वृत्तयः ।
न तावत्तन्निजं रूपं जायते सुविचिन्तितम् ॥१७३॥

तस्माच्चित्तस्य वृत्तीनां स्थिरतायै विपश्चिता ।
दर्शनान्यधिगम्यानि योगः सेव्यश्च धीमता ॥१७४॥

चित्तवृत्तिविशुद्ध्यर्थं धर्माचरणमिष्यते ।
देवद्विजगुरुप्राज्ञ-पूजाऽस्माभिः प्रशस्यते ॥१७५॥

धर्मशास्त्रोपदिष्टानामाचाराणां प्रचारणे ।
न हि वैमत्यमस्माकं लेशतोऽपि हृदि स्थितम् ॥१७६॥

शौचं, स्नानं, स्थिरं सन्ध्यावन्दनं श्राद्धतर्पणम् ।
स्वाध्यायो वैश्वदेवं च सर्वमस्मत्प्रियङ्करम् ॥१७७॥

मन्वादिधर्मशास्त्रेषु प्रोक्तानां सर्वकर्मणाम् ।
फलमस्मन्मते सर्वं दृष्टमत्रैव वर्तते ॥१७८॥
अस्माकं धर्मशास्त्रेषु नास्ति किञ्चन तादृशम् ।
कर्म, यन्निष्फलं भूत्वा परिणामे व्यथाप्रदम् ॥१७९॥
जगद्वन्द्यमहामान्यमहर्षीणामुदीरितम् ।
प्रत्येकमेव सत्कर्म दृष्टदिव्यफलप्रदम् ॥१८०॥
किन्तु मृत्योः परं तेषां कर्मणां भुज्यते फलम् ।
त्रिविष्टपे वा पाताले नरके वा यमालये ॥१८१॥
इत्युक्त्वा जनता यस्मात्सत्याद् दूरं वियोजिता ।
नैतदस्मत्प्रियं, तस्मादेतत्सत्यमुदीरितम् ॥१८२॥
अथैतेन प्रपञ्चेन यद् विविक्षितमस्ति भोः ।
इहेश्वरस्वरूपं तत् समाहारेण गीयते ॥१८३॥

( अधिष्ठानम् ॥ )

अनन्तकोटिब्रह्माण्ड—भ्रमणं यत्र जायते ।
अव्ययं तदधिष्ठानं रूपमस्तीशितुः परम् ॥१८४॥
'नो सदासीन्नासदासीद्' इति वेदैरभिष्टुतम् ।
तन्निर्गुणं निराकारं निष्क्रियं श्रुतयो जगुः ॥१८५॥
सद्भावव्यतिरिक्तत्वाच्चार्वाकैस्तदुपेक्षितम् ।
शून्यमद्वयवज्रं तद् आचख्युः सुगतानुगाः ॥१८६॥

द्रष्टारं साक्षिणं केचित् पुरुषं तं चचक्षिरे ।
अभावव्यतिरेकेण केचिदात्मानमूचिरे ॥१८७॥

अत्र ज्ञातृत्वमारोप्य चिकीर्षां च कृतिं तथा ।
प्रकृतौ केचिदाख्यान्ति जडतां ज्ञानशून्यताम् ॥१८८॥

असद्वा इदमग्रेऽभूत्, ततो वै सदजायत ।
इत्याद्युपनिषत्स्वेतद्, असच्छब्देन चेरितम् ॥१८९॥

( अधिष्ठिता प्रकृतिः प्रधानं वा )

अप्रमेये महत्यस्मिन्नवाङ्मनसगोचरे ।
अधिष्ठितमधिष्ठाने द्वितीयं रूपमीशितुः ॥१९०॥

तदधिष्ठितमप्येतत् परैरव्यक्तसंज्ञया ।
प्राचार्यैरर्चितं शास्त्रे भूयः प्रकृतिसंज्ञया ॥१९१॥

यावद् बृहदधिष्ठानं तावद् बृहदिदं वपुः ।
प्रकृतेर्वा प्रधानस्य व्यक्तमूलस्य वा सतः ॥१९२॥

कार्यभूता वयं जीवा यावत्सूक्ष्मिष्ठया दृशा ।
सूक्ष्मातिसूक्ष्मं पश्यामस्तावत्तद् व्यक्तमुच्यते ॥१९३॥

सूक्ष्मदर्शनशक्तौ तु कुण्ठितायामतः परम् ।
यददृश्यमविज्ञेयं यदप्रत्ययगोचरम् ॥१९४॥

तदव्यक्तं प्रधानं तत् तां मूलप्रकृतिं परे ।
संगिरन्ति महात्मानः परावरविदग्रजाः ॥१९५॥

तदेव व्यक्ततामेति जायते तच्च तिष्ठति ।
तदेव लयमायाति तदेवैतज्जगत्त्रयम् ॥१९६॥

"तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः"

" तदेजति तन्नैजति तद् दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः"

" एषो ह देवः प्रदिशो नु सर्वाः
पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः
प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः"

" यस्माज्जातं न पुरा किञ्चनैव
य आबभूव भुवनानि विश्वा ।
प्रजापतिः प्रजया संरराणस्
त्रीणि ज्योतींषि सचते स षोडशी"

( व्यक्ता महान्तः )

तस्याव्यक्तप्रधानस्य महान्तः सन्ति ये त्रयः ।
लोकास्तान् सात्त्विकान् प्रोचू राजसाँस्तामसाँस्तथा ॥१९७॥

( सात्त्विको महान् )

तेजसां यो महान् कूटः सूर्यचन्द्रानलादिषु ।
ग्रहनक्षत्रतारासु स व्यक्तः सात्त्विको महान् ॥१९८॥

( राजसो महान् )

प्रभवो भगवान् वायुः क्रियात्माऽनन्तगोलभृत् ।
स राजसो महान् व्यक्तो मातरिश्वा सदागतिः ॥९९९॥

( तामसो महान् )

तृतीयस्तु महान् व्यक्तो भूर्लोकस्तामसःस्मृतः ।
यमाश्रित्यावतिष्ठेते महान्तौ द्विविधावपि ॥१०००॥
(केचिदत्र महच्छब्दाद् बुद्ध्यर्थं ग्राहयन्ति नः ।
किन्तु नैव प्रसिद्धाऽस्य क्वचिद् बुद्ध्यर्थवाचिता ॥१००१॥
तथात्वे महतीशब्दः प्रायोक्ष्यत, न वै महान् ।
नाहंकारस्य चैवास्या बुद्धेर्जन्मापि सम्भवेत् ॥१००२॥
बुद्धिरध्यवसायोऽस्ति विवेकात्परतस्तु सः ।
जायते, स विवेकोऽपि ह्यहंकारात्परं भवेत् ॥१००३॥
अहंकारात्परं चित्तं मनो वा, मनसः परम् ।
विवेकोऽध्यवसायस्य जनको यः सुविश्रुतः ॥१००४॥
तस्मान्न महतः शब्दाद् बुद्धिरत्र विवक्षिता ।
निरुक्तव्यक्तलोकानां त्रयाणां वाचकस्तु सः) ॥१००५॥
भूर्भुवः स्वरिति ख्याता महाव्याहृतयोऽव्ययाः ।
त्रयाणां महतामेषां वाचिका वैदिकेऽध्वनि ॥१००६॥

( अहङ्कारः )

व्यक्तेष्वेतेषु लोकेषु महत्सु त्रिविधेष्वपि ।
असङ्ख्येया अनन्ताश्च प्रोल्लसन्तीह जातयः ॥१००७॥

योनौ योनौ पृथग् जातिर्नित्या नित्यं विराजते ।
जातौ जातावहङ्कारो महता परिपोष्यते ॥१००८॥

परिपुष्टादहङ्काराद् अप्रमेयाः परःशताः ।
व्यक्तयः सम्भवन्तीह क्षुद्रा नद्य इवाध्रुवाः ॥१००९॥

अहङ्कारः स्वभावोऽसौ महतः सुव्यवस्थितः ।
तस्मात् त्रयाणां महतामहंकारास्त्रयो मताः ॥१०१०॥

गिरिसागरवृक्षेषु तृणकाष्ठाश्मधातुषु ।
तमःप्रधानोऽहंकारो भासते तामसाभिधः ॥१०११॥

आकीटादापतङ्गाच्च पशुभ्यश्चा च मानवात् ।
कामक्रोधप्रधानोऽसौ राजते राजसाभिधः ॥१०१२॥

सिद्धेषु मुनिवर्येषु योगिष्वेकान्तवासिषु ।
सत्त्वप्रधानोऽहंकारः शोभते सात्त्विकाभिधः ॥१०१३॥

वस्तुतस्तु व्यक्तिभेदादहंकारभिदेष्यते ।
न तस्मादिह सादृश्यं साकल्येनोपलभ्यते ॥१०१४॥

तस्माद् यावन्ति लोकेऽस्मिन् शरीराणि पृथक् पृथक् ।
तावन्तस्तदहङ्काराः क्षणिकाः परिणामिनः ॥१०१५॥

( तन्मात्राणीन्द्रियाणि च )

देहोत्पत्तावहंकारः प्रधानं कारणं, ततः ।
तन्मात्राणां समुत्पत्तिर्मनसा चेन्द्रियैः सह ॥१०१६॥
(मातापितृमनोवृत्तिरहंकारो हि कारणम् ।
पुत्रव्यक्तेः प्रसूतौ तत्प्रागेवास्ति प्रकीर्तितम्) ॥१०१७॥
तन्मात्रैरिन्द्रियैः साकं पोष्यमाणैरनारतम् ।
कान्तमत्यद्भुतं किञ्चिज्जन्यतेऽत्र कलेवरम् ॥१०१८॥
तदित्थं जायते नित्यं भौतिकं निखिलं जगत् ।
व्यक्तिरूपं चिरं तिष्ठद्-अचिरेण विनश्यति ॥१०१९॥
अव्यक्तस्याविनाशित्वान्महान्तोऽप्यविनाशिनः ।
महतामविनाशाच्च नित्याः स्युर्योनिजातयः ॥१०२०॥
योनेर्जातेश्च नित्यत्वाद् योनिजात्यात्मकं जगत् ।
यादृगद्यास्ति तत्तादृक् स्थास्यतीह निरन्तरम् ॥१०२१॥
निदर्शनमिहास्माकमपारः सरितां पतिः ।
नश्यत्स्वपि तरङ्गेषु यस्तरङ्गी न नश्यति ॥१०२२॥
तस्माज्जगदिदं सर्वं व्यक्तिरूपेण नश्वरम् ।
योनिजात्यादिरूपेण नित्यमव्यय ईश्वरः ॥१०२३॥

अस्मिन महासागरसन्निभेऽव्यये
जगतत्रये ब्रह्महरीश्वराभिधे ।
तरङ्गवीचीजलबुद्बुदोपमाः
प्रभूय जीवाः प्रलयं प्रयान्ति ॥१०२४॥

नामक्रियाधर्मगुणा यथा पृथक्
प्रकल्पिताः सत्सु हि बुद्बुदेषु ।
तथैव देहेषु सचेतनेषु
जातेषु, नष्टेषु लयं प्रयान्ति ॥१०२५॥

उद्भवस्थितिमन्नश्यज्जीवानन्त्यलसद्वपुः ।
तदीश्वरस्वरूपं तन्नत्वैवात्र शिवं भजे ॥१०२६॥

इति पञ्चदशः परिच्छेदः ॥

॥ ॐ तत्सद् ब्रह्मार्पणमस्तु ॥